न शून्यमपिमन्दिरं विसदृशं रिपूणामभू-
द्यदेव महिमाद्भुतं जयति केशवक्ष्मापतेः ।।३४।।

उपनीय धनौघमर्थनाभं
प्रथमं लिम्पति यत्तु चन्दनेन ।।
तदवैमि तदक्षराणि दृष्टा-
न्पयसार्धं तनुतेऽस्य योग्य-भावम् ।।३५।।

गङ्गायां समजीजन-च्छु तनयान्धीरानुदारान्गुणैः
क्षोणीशः कुरुवंश-शन्तनुरिवाऽभीक्ष्ण स पञ्चात्मजान् ।।
गङ्गैषां जननी बभूव जनको यत्केशवस्तद्बुधैः
कार्यैर्कैर्वचनैर्गुणानुवचनं स्फूर्त्या कया संसदि ।।३६।।

गुणैरनन्तैः परिभाव्य तातो
नाम्नाप्यनन्तं विदधे तनूजम् ।।
ज्येष्ठं जनन्या हित-लालनेन
नाम्नाऽभवद्वावरसः स एव ।।३७।।

ज्येष्ठो वावरसो युधिष्ठिर इवास्त्यस्यानुजोस्त्यक्वणो
धीरो भीम इवापरोज्र्जुन इव त्रिम्मल्लनाथो जनुः ।।
तस्यास्तामनुजौ यमाविव परौ श्रीरामनारायणौ
दुग्धाब्धेरिव पञ्चकल्पतरवस्तस्याऽभवन्नात्मजाः ।।३८।।

तस्यास्य नायक-कृतातुल-पूर्व-जन्म
धर्मांम्बु-पादपजनीन-फलानि-पञ्च ।।
आरभ्य वावरस-नायक-मादिमेषा-
मस्माकनायकमुखानि जगत्सुखानि ।।३९।।

पञ्चाऽपि कल्पतरवः प्रतिपादिता ये
पूर्वं द्विजेषु ननु तम्मण-नायकेन ।।
नूनं त एव तनुजत्वमुपेत्य तस्य
प्रादुर्बभूवुरिह वावरसादि-रूपः ।।४०।।

स वावरसनायको हृदयसायको विद्विषां
जितत्रिदशनायको विविध-सम्पदां दायकः ।।
युधिष्ठिर इवानुजैरनुगतश्चतुर्भिर्निजै-
र्भुवां च सुरपादपैर्जयति पारिजातोऽपरः ।।४१।।

यशो विलासैरभिभूतवैन्यः
शौर्येण विद्रावित-शत्रुसैन्यः ।।
दानेन दूरीकृत-दानदैन्यः
समः क्षितौ वावरसेन नान्यः ।।४२।।

जिह्वा प्रह्वायते यद्गुण-गण-गणनारम्भकाले कवीनां
स्वान्तं स्वान्तं तदैव प्रकटयति मनाक् स्फूर्तिभावात्तदानीम् ।।
हस्तव्यस्तो लिपीनां भवति विलिखने यश्च चाञ्चल्यमेति
प्रायः कायस्थपङ्क्तोऽप्यहमहमिकयोपस्थिते तद्गुणानाम् ।।४३।

सङ्गृह्णामि निरन्तर त्यजति नो यन्मार्गणौघान् फलैः
सम्पन्नान् कुरुते परं तु न कदाप्येतान्स्वपृष्टानुगान् ।।
किञ्चाऽऽकर्णमुपेत्य मञ्जति कुलं नासौ तदन्तागत
दातुं लक्षमलक्षयन् जयति तद्दातृत्वमत्यद्भुतम् ।।४४।।

ये नित्यं समनुन्नतन्त्यनु-वदन्त्यर्हामनर्हागिरं
ये चित्तानुविधान-वर्त्म-कुशलाः पूज्यन्त एते नृपैः ।।
चित्रं तत्र तु किन्तु चित्रमिदमस्याऽग्रं गुणापेक्षया
यन्नाम श्रुति-मात्रतो द्विजवरान्सम्पूजयत्युन्नतान् ।।४५।

तस्यास्य नायक-कुलाम्बुधिशीतरश्मेः
श्रीकार्तवीर्यनृपतेः कुरुते सहस्रम् ।।
प्रत्यर्थि-दानविधये विहितानुरागान्
बाहूनसावपि स वावरसः पुनाति ।४६।।

ये सृष्टा जलजासनेन जलदास्ते वारिमात्रं ददत्
युत्या ते न पुरेऽग्निरक्तकरकाः वर्षन्ति गर्ज्जन्ति च ।।
एवं वावरसाम्बुवाहमसृजच्छ्रीमान् सुतं केशवं
यो गर्ज्जन्निभृते सम-क्षितितले स्वर्णाम्बुधाराधरः ।।४७।।

यत्कीर्त्या निजया दशाऽपि विहिता गौर्यो दिशः सर्वशः
चातुर्यं तदनन्तनायकनृपस्यातीव-लोकोत्तरम् ।।
रुद्राणामनुवासरं विवदतां चिन्त्यैकगौरी कृते
न स्याद्वैसजमन्यया स्मरवशादेकादशानामपि ।।४८।।

श्रीमत्तमरणनायक-क्षितिपतेर्वंशावतंसोऽद्भुतः
श्रीमाणाणकनायको विजयते साम्राज्यसर्वंसहः ।।
येनाकारि सुरद्रुमस्य मनसो मात्सर्य-दोषो महा-
नर्थि-प्रार्थन-सार्थकृत्य-विधिना कल्पद्रुमेण क्षितेः ।।४९।।

शत्रुघ्नत्त्वमुरीकृतं रिपुकुले ध्वंसादनीकेऽमुना
ज्येष्ठाऽऽज्ञा परिपालनाय भरताऽप्याविष्कृता साऽऽत्मनः ।।
यः स्वात्मानुजलक्ष्मणानुसरणाद्रामत्त्व-माविष्कृतं
श्रीशावाक्वणनायकस्य जगतात्मासँश्चतुर्णां मुदे ।।५०।।

जित्वा येन दशोदिशः सुनिहिताः स्तम्भाः जयाऽऽकाङ्क्षितं
नद्धं तेषु गुणैर्महद्भिरमलं कीर्त्तेर्वितानं महत् ।।

यत्प्रान्तेषु विलम्बतेऽति-महति-प्रीता प्रतापावलि-
र्यन्मध्ये परिमण्डलत्त्वमभजद् चित्रं विधोर्मण्डलम् ॥५१॥

यस्मिन् यच्छति वाञ्छिताधिकवनान्याशासने भिक्षुका
प्राणानामति संख्यतामतिशया यामं परां विस्मृतिम् ॥
नैर्बुध्यादिति गर्हणां विदधते धातुश्च बाहून्बहू-
न्यद्दाणात्तु न यो व्यधाद्द्विभुजिनामस्माकमत्रासनः ॥५२॥

भिक्षुः पाणिं पुरस्तादुपनयति सतः पाणियुग्मं ततश्च
प्रावारान्तं ततस्तं सकल-मसि-जितो-मस्तकस्याधिवासः ।
पौत्रं तत्राप्यनाति-प्रचुरतरतया यद्वितीर्णे धनौघैः
पश्चात्तापं महान्तं निजहृदि कुरुते तुर्य वर प्राग्रहेण ॥५३॥

(स्वल्पपाणि-प्रकाशात्) ॥५३॥

लक्ष्मीर्यस्यकराम्बुजेऽमलसुधाकीर्तिः कवीनां मुखे
कान्तिः कामतनौ धृतिर्हिमगिरौ विद्या सुवाचस्पतौ ॥
एकत्र-स्थिति-संकटाऽक्षमतया विश्रृम्भतः स्वं श्रमं
लेभे तातगृहे विनोदयति किं सापत्न्यजान्मत्सरात् ॥५४॥

यस्योत्सर्ग-जल-प्रवाह-पटलै-राकालिक प्रावृषा
पूर्णाम्भः सुरनिम्नगोर्मि-निवहैरुन्मत्त-गङ्गीकृता ॥
वाराणस्यभवद्यदा बहु तदा मत्स्योदराऽऽसङ्गिनः
भ्रान्त्या काशिनिवासि-सर्वजनता स्नाति प्रभा पिस्मिता ॥५५॥

एकं तावदिदं महन्मनसि नो नौचित्यमुद्भासते
यद्दानाम्बुभिराहितेषु जलधिष्वन्येषु सप्तस्वपि ॥
एषां प्राकृतवैकृतादि-विषय-भ्रान्त्या भ्रमन्त्यो दिशं
गङ्गाद्याः सरितः पतिव्रतमहो धास्यन्त्यनग्नाः कथम् ॥५६॥

असोष्ट सोप्यष्ट-गुणं गुणौघैः
सुतद्वयं पावक-नामिकायाम् ॥
लक्ष्म्यां सपत्न्यामिव धर्मपत्न्यां
आराधनाद्भावरसः शिवस्य ॥५७॥

ज्येष्ठस्तस्य समाप्तिभागमृत-वत्कण्ठे द्विजिह्वान्निजान्
देशादप्यपसारयत्यनुदिनं पुष्णाति कामान् बहून् ॥
मृद्वच्छः पिशितोदधद्द्विजपतीन् गौर्चो यदीया दिशः
कीर्तिर्धावति कोप्यसौ विजयते रुद्रोऽरिविद्रावणः ॥५८॥

किशोरकस्यैव यशो-वितानं
यशोऽन्यत्तस्य दिशो दशोऽपि ॥

स एष रुद्रः कृतराजमुद्रः
क्षुद्रोप्यभूद्यस्य पुरः समुद्रः ॥५६॥

सत्सङ्गावाप्त-गङ्गादिक-सकल-महातीर्थ-सङ्गादभङ्गा-
नाङ्गादिप्रौढ़िभङ्गाचरणविमलितान्यन्तरङ्गानि बिभ्रत् ॥
गङ्गादासस्तदङ्गादनुतनुरनवद्य-द्विदीर्णास्तुरङ्गः
मातङ्गाः शैलतुङ्गान् विदधुरपधनान्वतंतुङ्गान्यपाङ्गान् ॥६०॥

पितृत्त्वमाप्यांकणनायकस्य
लब्धुं सुखं केशवनायकेन ॥
यत्तद्विधानोक्तमथो निकाय-
व्यूहः सुखीभूय पृथक्किमस्याः ॥६१॥

तम्मणेन यदाऽऽहृतं बहुधन दातुं द्विजेभ्यस्ततोऽ
नन्तस्तद् द्विगुणीकरोति सहसा त्रैगुण्यमत्याकणः ॥
तद्रुद्रः कुरुते चतुर्गुणमिदं गङ्गा शरघ्नं ततः
षाड्गुण्यं कुरुते पितामह मनोवृत्ति दधत्केशवः ॥६१॥

अन्यच्चाद्भुतमेतदस्य सुमहद्यत्तत्प्रतापानल-
स्यौन्नत्यं बहुधा मनस्सुररिपोऽप्याशासते सन्ततम् ॥
यत्प्रालेय-दिनेष्वपि व्ययगता शेषान्नवस्त्रावने
शीतत्राणममी मनागपि ततो नान्यल्लभन्ते दृढ़म् ॥६६॥

श्रीविश्वनाथेक्षणकाम्ययाऽसौ
पुत्रैश्च पौत्रैश्रयुतः प्रपौत्रैः ॥
गम्भीरघोषेण गजैः स्वयूथैः
कदाचिदानन्दवनं विवेश ॥६४॥

काशी यात्रा विधानेन सहगृहपतयो येन नीता सहस्रं
तद्यात्रोपस्करं वाप्यखिलमनुविधा यापनीयावभीतिम् ॥
प्रादक्षिण्ये पृथिव्याः पृथुपृथुलयशास्तीर्थयात्रासु पार्थ-
स्साध्यं नीत्त्वा मुनीनामिव निजसुकृतस्याष्टगुण्यं व्यधत्त ॥६५॥

प्राज्यं पूर्वं स्वतुल्यद्वयमथ तथा स्वस्यपत्न्या••• (समेतः)
काश्यां रूप्यमयं चकार विधिवच्छ्रीवासुदेवाङ्गणे ॥
ब्रह्माण्डं विदधे हरिस्स्वयमथो तत्र तृतीयं तुला-
श्रीविश्वेश्वर-मण्डपाश्रित-कुरुक्षेत्रे चतुर्थं तथा ॥६६॥

काश्यामेकं प्रयागे परमिति विदधे कोटिहोमद्वयं बो
विप्राणां दक्षिणाभिर्धन-विषयगताऽऽशेष-तृष्णत्वमन्तः ॥
काशी यात्रां द्वितीयामधिविधिविहिता गोसहस्रं प्रयागे
काश्यामागत्य हेम्नः पुनरपि विदधे चक्रतीर्थे तुलां सः ॥६७॥

यश्चाभून्मणि-कर्णिका-परिसरे दिव्यस्तुलामण्डप-
स्तत्तोरण-किङ्किणी-ध्वजमहादीप्तं पताकोच्छ्रितः ॥
तं दृष्ट्वा जलशायि-विष्णु-सविधे मन्यामहे पुष्करं
स्वर्गाद्भूमितलं समागतमिवाऽऽनन्दाय मन्दाकिनाम् ॥६८॥

आरुह्य व्योमयानं वियति सुरगणास्तत्तुलाया दिदृक्षा
कान्त-स्वान्ता-निरुद्धे-पथि विपुलतरैर्मण्डपस्य ध्वजाग्रैः ॥
यत्तु तद् होमधूमाऽऽकुलितविनिविशप्रेक्षणास्तत्क्षणे-
नाशक्तास्तद्वीक्षितुं वाप्यदधुरवचारितामेव धान्याम् ॥६९॥

यत्कामाननुकूर्महे भुवि महादानं वय तत्पदं
कीदृक् किं श्रुतिराह यदवितथं मिथ्येति सन्देहिनाम् ॥
श्रीमान् केशवनायकोऽतिभगवद्भक्त्या तुलां मण्डप-
व्याजेनैतदहोपनीयनुनुदे सन्देहमात्यन्तिकम् ॥७०॥

अचीकरत्तामणनायकेन
तुलां सुवर्णैर्मणिकर्णिकायाम् ॥
यदा तदा भूदतुलस्त्रिलोक्यां
स्वयं सुतः वावरसकणश्च ॥७१॥

एतस्याद्भुतमेकमस्य महतः कीर्तेश्च लोकोत्तरं
यत्प्रालेयदिनेषु शीतभयतः शत्रून्महस्त्रायते ॥
ग्रीष्मे तत्तपनातितापभयतः कीर्तेः सुधा चिन्तना-
त्ताभ्यामात्मकृतेन ते विदधते शीतोष्णधोर्वारिणी ॥७२॥

रम्यासु स्वर्ग-गेहेष्वनुदिनमसक्तत्तोलयामास लोहै-
र्लक्ष्मीं स्वर्णस्वरूपां यदयमजनयत्तेन भूयोऽग्यराधान् ॥
सर्वांस्तांनप्रमार्ष्टुं स्वजनकसिवनः केशवेनैव लक्ष्म्याः
काश्यां तेने सुरसरिति-तुलां स्वप्रभावादनन्तः ॥७३॥

लक्ष्मीकेशवयोस्तुलां विरचितां दृष्ट्वा हरश्चेतसि
पूर्णं क्षोभमवाप्य सतीति चकितस्तुल्यस्तयोर्नन्दितः ॥
श्रीमान् वावरसस्तदैव निजया गौर्येव कीर्त्या करोत्-
गौरस्यास्य तुलां कुलाम्बुजरविः सङ्कल्प-चिन्तामणिः ॥७४॥

दृष्टिस्तत्कर्मदृष्ट्या श्रुतियुगलमथाऽऽकर्णनेनापि कीर्ते-
र्ध्वानां धूम्रादिगन्धैर्गुणगणगणनैश्चापि जिह्वा जनानाम् ॥
सौवर्णं स्पर्शनैस्स्वकरकमलगता प्रतपदक्कजै........
सर्वाङ्गानाप्पर्णेन प्रमुदितमनसां किं किमानन्दितं न ॥७५॥

कीर्तिः केशव-नायकस्य कुशलाः कैलास-शैलं पुरो
गत्वाऽऽख्याति मुहुः सडिण्डिमरवं दूतीव सम्प्रेषिता ॥
काश्यां श्रीमणि-कर्णिका-परिसरे कृत्वा तुलां केशवो
लब्ध्वेदं पुरमाशु तत्सुरगणैः सम्पाद्यतां सत्क्रिया ॥७६॥

काशीपतेः करुणया किल काशिकायां
कृत्वा महावितरणानि स षोड़शादि ॥
विद्वद्गृहान्तरगतानि तमांसि मुग्ध-
माणिक्य-दीप-शिखयेव निराचकार ॥७७॥

सत्कृत्त्वोऽपि तुलायामारूढ़ोऽयं महार्घरत्नानाम् ॥
अस्य तु कृत-प्रयत्नं किमपि न रत्नं तुला भजे ॥७८॥

आत्मानं स हिरण्य-गर्भमसृजच्छ्रीमांस्तदा केशवः
पश्चात्तस्य अवाप पङ्कजजनने रन्तर्महान्त यदा ॥
मत्सृष्टो मदधीकृतो ममुखाज्जातान्द्विजान्मत्तनून्
दारिद्र्योपहताञ्छ्रियाविलासिताश्चक्रे किमित्यात्मभूः ॥७९॥

ब्रह्माणं दातुकामे नृपतिलकमणौ केशवे ब्राह्मणेभ्यो
ब्रह्मा-विष्णुश्चरुद्रः सुरगुरुमभिगम्यात्मनीनान्यपृच्छन् ॥
किं कुर्मः कुत्र यामेत्यमरगुरुरिमान् मन्त्रमूचे द्विजेभ्यः ।
प्रार्थ्याद्भृत्येस्त्वमर्त्येष्वखिलजनकृते मा विभागं कुरुध्वम् ॥८०॥

दत्तान् केशकनायकेन सकलान् कल्पद्रुमान् वृत्रहा
विज्ञायार्थिषु पुष्पभूषणकृते राज्यां सचिन्तोऽभवत् ॥
ब्रह्माणं किमुपैमि सृष्टिविधये तेषां पुनर्वाम्बुधिं
मथ्नामर्थनमावराम्यनुजवर्तिकं वा द्विजानामिति ॥८१॥

सहस्रां बाहूनामकृतकृत कृत्यामजनये
विधेर्वीणां वा तद्द्वितयमभिमन्ये खलु वृथा ॥
अमुष्यैकं मन्ये करमहमहो धन्यतरमि-
त्यजस्रं धेनुर्योचितरतिसहस्रं धटमुचाम् ॥ ८२

एका कामगवी सुरैर्नियमतो तत्तत्सुरैः प्रार्थिता-
नेकानेकविधार्थदानघटना स्वस्वार्थतो व्यापृता ॥
नागन्तुं क्षितिमण्डलेप्यवसरो यस्याः कथं सा नृणां
कामान्पूपुरयत्यवेत्य विदधे यः कामधेनु-व्रजम् ॥ ८३

निर्मथ्योत्तारसिन्धुं कथमपि महता····सुरकृतो सैव संसार सिन्धुम् ।
निर्मथ्य प्रत्यरत्नोचितकनककृतान् सिन्धुजान् केशवोऽदात् ॥ ८४

व्योम्नि व्योमचराश्चरन्ति विबुधा दिव्यैर्विमानैर्भुवि
क्षोणी-मण्डल-मण्डलानि त इमे यानैश्चरिष्यन्ति कैः ।।
इत्येवं मनसा विचार्य नृपतिः श्रीकेशवो स्वर्गजैं—
र्हैमैर्हैममयान् विधाय सुरथान् प्रादद्द्विजेभ्योऽयुतान् ।।८५।।

एकं स्वागमनात्मभूर्यदसृजत्सङ्कर्पणार्थे ततः
कञ्चिद् देशमसौ पवित्रमकरोत्सृष्ट्वा कलिन्दात्मजाम् ।
यस्मै दास्यथ पञ्चलाङ्गलमसौ तेनाऽपि देशे क्वचित्
कष्टे पञ्चनदे करिष्यति जनः स्नानं क्व वा कार्तिके ।।८६।।

किं दत्ता पृथिवी बलिभृता मृत्स्नामयी पर्वतै—
र्व्याप्तारण्यनदीनदो खरशतैरल्पोपभागाद्द्विजैः ।।
तं मन्ये सकलाऽपि येन घटिताः स्वर्णैः स पृथ्वीधराः
सप्तद्वीपवती ससागर वना दत्ता द्विजेभ्यांऽक्षया ।।८७।।

संत्यज्याद्य हिरण्य – गर्भपदवीं सृष्टिं सिसृक्षुर्नवां
भूतानां महतां घटं प्रथमतो हैरण्यमेवासृजत् ।
तेषामेव यतोऽधिकं जगदुपादानत्वमाह श्रुतिः
सौवर्णों किल केशवः सकलकं तद्विस्वचक्रं व्यधात् ।।८७।।

स्वर्गेकल्पलता सुरेन्द्र भवने दत्ताश्चकल्पद्रुमाः
विप्राणामजिरेष्वृताधिरहिता माभूत्तयोर्मत्कृता ।।
इत्येवं मनसा वधार्यसकलक्ष्माभूषणं केशव—
श्चक्रे कल्पलता-प्रदानमपि तद्विप्रेभ्यएवादगात् ।।८६।।

भार्याभिर्भक्तकाना दत्त सिन्धून् षड्पतिदवरद्युक्तमत्यन्तमेभ्यो -
यत्सौर सिन्धुमादात्तादनुचरदसच्छूद्र जात्यर्थमूहे ।।९०।।

निर्मंथ्य क्षीरसिंधुं यदभिहरिणा कौस्तुभाख्यं तदेकं ।
यच्चोद्धूतं स्यमन्ताधिकमहिमकराद्रत्नमेवाद्वितीयम् ।।
भूमौ चिन्तामणिश्च त्रिभुवनविषये त्रिरत्नान्यभूवं—
स्तैरेवासंख्यसंख्यैः कथमकृतनृपः केशवो रत्नधेनुम् ।।९१।।

इत्थं येनकृतानि षोड़शमहादानानि काश्यां भुवि
कीर्त्त्वा ब्रह्मपुरी कृता शिवपुरी स्पर्द्धाभिवर्द्धारिता ।।
सर्वोपस्करपूर्णं दिव्यभवनाधिष्ठान सत्कर्मजा—
ऽनुष्ठाने क्षपिताथसंघ तुलिता यद् ब्रह्मणा ब्रह्मणा ।।९२।।

प्रासादोद्यान वापीप्रहित भवनमठान् धर्मशाला प्रपादीन्
कृत्वानृण्यान्निबन्धीकृत भवन भुवां मोचनानि द्विजानाम् ॥
उद्वांहाँश्चौलमौञ्जी बहुधनवसनानग्निहोमादि पूर्वान्
ज्योतिष्टोमादि यज्ञानथवहुविदधे केशवः कोटि सङ्ख्यान् ॥९३॥

धर्माद्यद्यपि कोटिशोऽत्रविहिता सन्तोषं मनस्ततो
नैव प्राप यदा तदाऽध्यवसितुं विष्णोस्स्मृतेर्व्याकृतौ ॥
यच्छत्रायितरामपण्डितसुतं श्रीकेशवः क्ष्मापति—
र्विद्वत्ससदि नन्दपण्डितमतिप्रीत्या न्ययुंक्त स्वयम् ॥९४।

काश्यां धर्माधिकारि प्रथितकुलमणिर्धर्मशास्त्रैकनिष्ठः
श्रीमान्महीपत्यविधबुधसुतानन्तसूरेस्तनूजः ॥
श्रीरामस्तस्यसूनुः प्रथित बहुकृति धर्मशास्त्रेषु नन्दो
व्याचष्टे केशवीय प्रणय परवशो वैष्णवं धर्मशास्त्रम् ॥९५॥

यद्यप्येतदतीव साहसमिवाभाति क्व विष्णुस्मृति—
र्वुद्धिर्वा मम मानुषी क्व च तथाप्युत्कण्ठते मन्मनः ॥
तद्वचाख्या विघये प्रसन्नहृदयः साक्षात्स्वयंकेशवः
प्रोत्साह्यात्र यदि प्रवर्तयति मां किं स्यादशक्यं तदा ? ॥८६॥

इह खलु करुणालयो भगवान्नारायणः शेषतल्पात्कल्पादावुत्थाय वाराहं च पुरोत्थाय निरधाविजलधिमग्नां दन्तलग्नां वसुन्धरामुद्धृत्य जिज्ञासया पृष्टान् सर्वेष्टान् वर्णाश्रमधर्मान् प्रोवाच । तच्च कश्चिद्विपश्चिद्दृषिरुपश्रुतसङ्गतिसम्पादनाय स्वनिर्मिताया चतुरध्याय्या भगवन्मुखनिर्गतानां सपद्यानामनवद्यानां चतुरध्यायीं परिपूर्य शतमध्यायान् परिकल्प्य काण्डत्रयेण निबबन्ध । यथा भगवत्प्रोक्ता उपनिषदो द्वैपायनतः । तत्र प्रथमाध्यायेनोपोद्घातं वर्णितम् । तस्येदमाद्यौ श्लोकौ—

ब्रह्मरात्र्यां व्यतीतायां प्रबुद्धे पद्मसम्भवे ॥
विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिजलानुगाम् ॥१॥

जलक्रीड़ारुचिशुभं कल्पादिपु यथा पुरा ॥
वराहमास्थितोरूपमुज्जहार वसुन्धराम् ॥२॥

Closing

प्रजासुखे सुखी राजा तद्दुःखे यश्चदुः खितः ॥
स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥९७॥

Closing: यो राजा प्रजाजनानां लोकानां सुखे सति तेनैव हेतुना सुखवान् सन्तोषवान्, यश्च तासां प्रजानां दु :खे सति तेनैव हेतुना दुःखवान् रतिभान् भवति, सलोकेऽस्मिन् कीर्तियुक्तः सन् प्रेत्य प्रयाणानन्तरं स्वर्गे ब्रह्मलोकादौ महीयते मोदते । एतेन यथोक्तं धर्मजातस्यैहिकामुष्मिकफलकत्वेन सर्वधर्मोत्कृष्टतयावश्यमनुष्ठेयत्वमभिहितम्।

Colophon: इति श्रीमान् महाराजाधिराज श्री वसिष्ठ वंशावतंस श्रीकोण्डपनायकात्मज श्रीतम्मसालायकापरनामधेय श्री केशवनायक प्रोत्साहित श्री वाराणसीवासि धर्माधिकारि श्री रामपण्डितात्मज श्री नन्दपण्डितकृतौ श्रो विष्णुस्मृति- विवृतौ श्रीमत्यां वैजयन्त्यां तृतीयोध्यायः ।। (P55A)

## 30/25025 धर्मनिर्णय सदाचारवत्स (अहल्या कामधेनु)

Opening श्रीगणेशायनमः । श्री गणपत्यं (म्बि) का गुरुभ्योनमः ।। श्रीमङ्गलमूर्तिर्जयति ।।

देवं वरदराजं श्रीकेशवं प्रणमाम्यहम् ।।
सदाचारप्रियं नित्यं सदाचारप्रवृद्धये ।। १ ।।

वरदराजमिति । रन्तिदेवो राजर्षिर्महाभक्तो बभूव । तत्काले तत्सङ्गात्सर्वेऽपि नारायणपरायणाः बभूवुरिति भागवता (दा) ख्यातमस्ति । तद्भक्त्या तस्मै वरार्पणेन (वरप्रदानेन) तथा च या (यो) भक्त्यनुग्रह (भक्तानुग्रह) कारकः श्रीभगवान् श्री केशवनाम प्रसिद्धया कलिकल्मषनिराकरणाय भक्ताभीष्ट पूरणार्थं जम्बूमार्गे (ऽ) रण्यतीर्थे तत्र समुद्भूत्रा चर्मण्वती सरित् (सरिति) प्रतिमास्वरूपो कलावाविर्भूय तत्रैव तत्तीरे महदायतन भविष्यति, तत्रैव स्थास्यामीति वायुपुराणोक्त तन्माहात्म्ये प्रसिद्धमेवास्ति । साम्प्रतममाप्यहराधनेन (साम्प्रतमप्याराधनेन) भक्ताश्च देवाज्ञां स्वप्ने लब्ध्वा वराम्बुधेराविर्भूतो निमित्तये सूचितमेवेति । तथैव येऽन्येऽपि भक्त्या सम्यगाराधयन्ति, तेभ्योऽपि वरदायकश्च तथा च तदाराधनतो भक्ता अपि स्वभक्तेभ्यो दीनेभ्योऽन्येभ्यो वरदायका भवन्तीति श्री केशवदेवप्रभावस्तु विख्यातमेव । यतो मयाऽत्र मङ्गलाऽऽचरणे वरदराजं श्री केशवंदेवं प्रकर्षेण नमामीति ।। ननु प्रथमारम्भे त्वहल्याकामधेनौ मङ्गलाचरण कृतमेव, पुनः पुनः किमर्थं मङ्गलाचरणं कृत्वा श्लोकयोजना क्रियत इति तयोच्यते । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थसमाप्तौ चेति पूर्वत एव शिष्टाचारः । तथाच कामधेनोरस्या वत्साश्चाङ्गाङ्गीभावत्त्वेन पूर्तिहेतोः विघ्नौघनिवारणाय प्रतिवत्सं गतमेव वरदराज श्री केशवं नत्वा स्मृत्वेति मङ्गलाचरणं सदाऽभिमतम्—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञ क्रियादिकम् ।।
सर्वं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।। १ ।।

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।।
मनोऽभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।। २ ।।

केशवं क्लेशनाशनमित्यादि । यन्नाम स्मृत्यादिना तपोयज्ञक्रियादिः सम्पूर्णं भवति, तस्यैव मुहुर्मुहुः स्मरणेन प्रतिवत्से मङ्गलाचरणेन निर्विघ्नतापूर्वकं ग्रन्थपूर्तिरेव स्यात् । तथा च पूर्वं वरदं प्रभुकृतोपकार स्वेष्टदैवतं कथं विस्मरामीति हेतोः प्रतिवत्से मङ्गलाचरणं क्रियते ।। प्रकृतमनुसरामः ।।

श्रीमन्मल्लारि गवाख्यो गोतमाख्या सती परा ।
लोकेऽस्मिन् प्रथितावास्तां दम्पती बुद्धिसागरौ ।। २ ।।
(सतीनां पतिव्रतानां मध्येश्रेष्ठा)
खण्डेरावाह्वयो जातस्तयोस्तनय औरसः ।।
अहल्या विदिता नाम्ना तत्पत्नी कुलपूजिता ।। ३ ।

तत्कुलपूजिता तत्कुलेऽतीवश्रेष्ठा सदाचरणशीलत्वेन; देव गो ब्राह्मणाराधनपरायणा महादानापूर्णत्वेन।तीव वदान्या पूजितेति सङ्गच्छते

समाराधयती देवं साम्बं शङ्करगादरात् ।।
नियमैश्च यमैर्भक्त्या सदा सद्व्रतमाश्रिता ।। ४ ।।
ब्रह्मचर्यै वरिष्ठानां सर्वशास्त्रार्थ सम्विदाम् ।।
विप्राणां हि सभामध्ये स्थिताया (सा) विनयान्विता ।। ५ ।।
पुराणधर्मशास्त्राणि चेतिहासादि सत्कथाः ।।
शृण्वती सा यथाकालं ज्ञानवृत्तिं परां गता ।। ५ ।।

विप्राणां इति जप पूजनाद्यन्ते सावकाशे शृण्वती व्यर्थकालक्षयं न कुर्वती नित्यनैमित्तिक कर्म्मणोन्ते हरिकथामात्रैकजीवना इत्यर्थः।

यादृशी हि सभारम्या ब्राह्मणानां महात्मनाम् ।।
अहल्या सन्निधावास्ति नैवान्यत्र हि तादृशी । ६ ।।
जयसिंहो राजराजोऽभूद्वाजेरावात्मजोऽपरः ।।
यद्वा काले ययोरासीत्सभा सैवेह तादृशी ।। ७ ।।
दुराधर्षाश्च विद्याभिस्तेजोभिस्तपसां गुणैः ।।
वेदवेदाङ्ग- तत्वज्ञा ईदृशा ये तदाश्रयाः ।। ८ ।।
पृथिव्यां रत्नपूर्णायां सन्ति भूपाः सहस्रशः ।।
कालेऽस्मिन् क्वाऽपि नैवास्ति ब्राह्मणानां सभेदृशी ।। ९ ।।
दानं विप्रार्चनं नीतीः सदाचरणमेव च ।।
अहल्यायाः समं नास्ति नास्ति क्वापि महीतले ।। १० ।।

नास्ति नास्तीति द्विरुक्तिः सर्वथैवनास्ति इति प्रतिज्ञा पूर्वकं द्विरिति सिद्धान्तः इति तात्पर्यार्थः। तथा च ग्रन्थारम्भे व्रतवत्से परिभाषादौ ग्रन्थोक्तप्रास्ताविकोक्तमेव प्रकृतमनुसरामः ।

तदाख्यया ग्रन्थरूपा धर्म्मनिर्णय सग्रहा ॥
आविर्भूताऽस्ति देवाज्ञा स्वप्नलब्धा वरा बुधैः ॥ ११ ॥
अहल्या कामधेनुर्वै निर्णयौघपयः श्रवा ॥
नानाभिराम वत्सोद्यत् कीर्तिरुपाऽप्यलङ्कृता ॥ १२ ॥
देव प्रतिष्ठा वत्साख्य प्रोक्तास्त्वाचारसिद्धये॥
सदाचारस्य वत्सोऽयं प्रोच्यतेऽत्र सतां प्रियः ॥ १३ ॥

तत्रादौ सदाचारस्वरूपमाह ॥ सतामाचारः सदाचारः। सद्भिराचरितं श्रुति-स्मृत्युक्तं यत् सतां आचरणं स्यात् स एव सदाचारः ॥

Closing

दीपदानं गोप्रदानं दत्वा शान्तिर्भवेद् ध्रुवम् ॥
सदाचाराह्वये वत्से समासेन निरूपितम् ॥
ग्रन्थान्तरेषु बहुधा द्रष्टव्यं सुधिभिः सदा ॥
कलावस्मिन् युगे कर्म्म कर्तुं शक्तिर्न विद्यते ॥
तस्मात्स्वल्पेनैव प्रदर्शितः इति ॥

Opening

## 31/24819 रामनिबन्ध [क्षेमरामप्रणीत]

॥ श्री गणेशायनमः ॥

गुरुं नत्वा च वाग्देवीं विज्ञानं कालनिर्णयम् ॥
क्षेमरामेण रामाख्यो निबन्धोऽयं प्रकाश्यते ॥१॥

अथ तिथिद्वैधा ॥ पूर्णा खण्डा च । तत्र स्कान्दे—
प्रतिपत्प्रभृतयः सर्वा उदयादुदयोद्भवा ॥
सम्पूर्णा तिथिराख्याता हरिवासर वर्जिता ॥

हरिवासर एकादशी तत्र वेधान्तरं वक्ष्यते तद्भिन्ना खण्डा । तद्वेधमाह पैठीनसिः

पक्षद्वयेऽपि तिथयस्तिथि पूर्वां तथोत्तराम् ॥
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्येषा विधिः स्मृतः ॥

दक्षः—

त्रिमुहूर्ता न कर्तव्या या तिथिक्षयगामिनी ॥
त्रिमुहूर्ताऽपि कर्तव्या या तिथिर्वृद्धिगामिनी ॥

शिवरहस्ये—

यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तगा ॥
धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः ॥

विष्णुधर्मोत्तरे— उदिते दैवत भानुः पित्र्य चास्तमिते रवौ ।।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्य. कव्ययोः ।। इत्यादि ॥

**Closing**

अथ निर्णयवक्तुम्योग्यानाह - कालिका पुराणे—
देवे च देवतायां च कर्मण्यपि च वैदिके ।।
श्रद्धा नास्ति सदा येषां तेषां वाक्यं विवर्जयेत् ॥

शारदा पुराणेः—

सेतिहास पुराणज्ञाः स्मृति सिद्धान्त वेदिनः ।।
नारायण प्रिया ये च तदुक्तं वेद भाषितम् ॥
नन्दाद्र् चद्रीन्दु(१९७९)भिर्वर्षैः कृष्णजन्माष्टमी दिने ।।
जातो रामनिबन्धोऽयं धर्म शास्त्र विचारतः ।
माता श्री पद्मिनी यस्य पिता श्री भवमण्डनः ।।
तेन श्री क्षेमरामेण निबन्धोऽयं प्रकाशितः ।।

**Colopho**

इति श्री द्विपञ्चाशद्ग्रन्थि दीक्षित बाबू तदात्मजः श्री लोकमणिस्तदात्मजः
श्री भवमण्डनस्तत्पुत्रः श्री क्षेमराम कृतोऽयं रामनिबन्धः समाप्तः ।।

**Post-Colophonic**

सं० १९०५ भाद्रपद शुक्ला १४ रवौ सम्पूर्णतामगमत् । लिखितं रामप्रसादेन ।
अलवर मध्ये ।।

## 36/24456 आचारादर्श

**Opening**

।। श्रीगणेशाय नमः ।।

दीक्षितो रणयज्ञेषु विविधानन्ददायिषु ।।
हरिरब्धिसुतावक्त्रसोमपीती पुनातु वः ।।१।।
अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् ।।
निबद्धयते निबद्धो यो धर्म शास्त्रनिबन्धिभिः ।।२।।

तत्र मनुः

ब्राह्मे मुहूर्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् ।।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ।।

ब्राह्मो मुहूर्तः सन्ध्यापूर्वदण्डद्वयात्मकः, तन्मूलान् धर्मार्थहेतु क्रिया निमित्तकान्,
वेदतत्त्वार्थमितत्त्वपदमपन्याय प्रतीतार्थं वारणार्थं, वेद तत्त्वार्थो ब्रह्मेत्येके ।।

विष्णु पुराणे—

ब्राह्मे मुहूर्ते सुस्थे च मानसे मतिमान्नृप ।।
विबुद्धश्चिन्तयेद्धर्ममर्थं चास्याविरोधिनम् ।।
अपीड़या तयोः काममुभयोरपि चिन्तयेत् ।।

Closing

वसिष्ठः

अपि च काठके । प्रवने विज्ञायते अद्य श्वो वा विजनिष्यमाणाः पतिभिः । सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वरः ।

समूल रचना भोगो मीमांसा न्याय निर्मला ॥
श्रीदत्तेन सतामेष आचारे दर्पणः कृतः ॥
दुरुक्तमपि सूक्तं मे मन्वादि वचनाश्रितम् ॥
अपि चर्मोदकं तीर्थं सलिलान्तर्गत शुचिः ॥२०००॥

Colophon

इति श्री महामहोपाध्याय श्री दत्तकृत आचारादर्शः समाप्तः॥

Post-Colophonic

संवत् १७८३ वर्षे आश्वि (न) मासि कृष्णपक्षे तिथौ त्रयोदश्यां चन्द्रवासरे नारायणात्मज गङ्गारामेण लिखितोऽयमाचारादर्शः ॥ शुभं भवतु ॥

## 43/25079 गयाश्राद्धपद्धति

॥ श्री परमेश्वराय नमः ॥

प्रणम्य परमात्मानं गयाकृत्यस्य पद्धतिम् ॥
गङ्गासहायो लिखति संक्षेपान्निज हेतवे ॥१॥
पद्धतिं तुलसीदत्तः सामगानां कृते व्यधात् ॥
प्रायः सैवेह संक्षिप्तरीत्या वाजसनेयिनाम् ॥२॥
प्रायेण नापेक्षतेऽसौ संक्षिप्तप्यन्य पुस्तकम् ॥
अतः पितृकामैरियमाद्रियतां बुधैः ॥३॥

चैव वैशाखाश्विन पौष माघ फाल्गुनान्यतम मासे मासान्तरे वा गयां गन्तुं चिकीर्षुः पूर्वमेकस्मिन् दिने एक भुक्तम्, तदुत्तरदिने मुण्डनमुपवासञ्च विधाय तदुत्तरदिने कृतनित्यक्रियो भक्तिनम्रः' श्री गणेशाभीष्टदेवताञ्च सम्पूज्य शुक्ल द्विवासाः शुचिराचम्य, वस्त्रादिनावेष्टितं श्राद्धदेशमागच्छेत् । ततः प्राङ्मुख उपविश्य सिद्धान्नसम्भवे सिद्धमिति पाचिकां पृष्ट्वा ॐ अपवित्र इति पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रयानीत जलैः श्राद्धवस्तूनि सिञ्चेत् ॥

Closing

एवं गया कृत्यं सम्यगनुष्ठाय गयातो गमन समये च यथालभ्योपचारैः श्री गदाधारं सम्पूज्य ध्यायेत् एवं स्तुवीत ।

गदाधरं गयावासं पित्रादीनां गतिप्रदम् ॥
धर्मार्थकाममोक्षार्थं योऽगदं प्रणमाम्यहम् ॥
कलि कल्मष कालार्तिदलनं वनमालिनम ॥
पातालाखिललोकेशं कुलोद्धारणमानसे ॥

इति स्तुत्वा साष्टाङ्गन्नत्वा गयातो यात्रां कुर्यात् । ततो येनैवमार्गविधिना गृहात्तीर्थमागतस्तेन मार्गविधिना स्वग्राम समीप ग्रामान्तरमागत्य तद्दिने तत्रैवोपवसन्निवसेत् । ततः कृतनित्यक्रियो भक्तिनम्रः श्री गणेशश्रीमदिष्टदेवतां च सम्पूजयेत् । यात्रारम्भवत् घृतश्राद्धं कुर्यात् ।। श्राद्धशेषघृतेन पारणं कुर्यात्, बन्धुभिः सह भुञ्जीत ।।.........

अथ माहेश्वरी धारा ८२ गयानामभिस्ततः परम् ।।८३
अरविन्दाद्रिकुण्डश्चेत्येवं ८४ चतुरशीतिका

**Post-Colophonic**

इति श्रीमन्महाराजाधिराज महाराव राजेत्यादि पदवी विराजमान बुन्दीश्वर श्री रघुवीरसिंह भूपाश्रितेन गङ्गासहायेन विरचिता गया श्राद्ध पद्धतिः समाप्ता ।।

**Colophon**

इति माघ शु. ३ गुरौ सं. १९५० लि. रामचन्द्रेण !

## 46/23903 दानविवेक

**Opening**

श्री गणेशाय नमः ।। अथ संक्षेपेण दानान्युच्यन्ते ।। प्रत्युपकार शङ्कारहित पात्रे स्वसत्तापरित्यागतो विशेषण विधिना द्रव्य त्यागो दानम् ।। :—

देवलः अर्थानामुदिते पात्र श्रद्धया प्रतिपादितम् ।।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यते ।।

तच्च दानं त्रेधोच्यते गीतासु—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विक स्मृतम् ।।
यत्तु प्रत्युपकारार्थे फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद् दानं राजस स्मृतम् ।।
अदेश काले यद् दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ।।

गारुडे—

अर्च्यते यत्सुवर्णादि तद् दानं कायिकं स्मृतम् ।
आर्त्तानामभयंदद्यात्तद् दानं वाचिकं तथा ।।
विषयादि प्रणाशेन दानं तन्मानसं भवेत् ।।

अथ पात्रम् ।।

याज्ञवल्क्यः —

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ।।
प्रथमं तु गुरोर्दानं दत्त्वा ज्येष्ठमनुक्रमात् ।
ततोऽन्येषां तु विप्राणां दद्यात्पात्रानुरूपतः ।।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये त्वनन्त वेदपारगे ॥

अथ प्रयोगः ॥ यजमानः कृतनित्यक्रियः पवित्रपाणी देशकाली संकीर्त्य सकलकलुषक्षयकोटिसमुद्धरणपूर्वकं विष्णु-सायुज्य-प्राप्तिकामोऽश्वत्थोपनयनं करिष्ये ॥ गृहे गणेशपूजादिनान्दीश्राद्धान्ते मंगलगीतवाद्यपुरस्सरः ब्राह्मणैर्युक्तोऽश्वत्थसन्निधौ गत्वा पञ्चहस्तां भूमिमश्वत्थस्य समन्तादुपलिप्य रङ्गवल्ल्यादिना विभूष्य अश्वत्थस्यैशानभागे पुण्याहं वाचयित्वा कुटुम्बिनमाचार्यं वृत्त्वा सम्पूज्याश्वत्थस्य पश्चादुपविश्य पञ्चामृत-मन्त्रैः पञ्चामृतेनाश्वत्थं स्नापयित्वा ततः शुद्धोदकेनसर्वो षधीभिः स्नापयित्वा हरिद्राकुङ्कुमहस्तैर्विभूष्याश्वत्थस्य पूर्वदिग्भागेऽग्निप्रतिष्ठान्वाधानेऽग्निवायु सूर्यप्रजापतिञ्चाज्येन त्रिरग्निं पवमानं च।........

अश्वत्थेवेतिनिरीक्ष्य प्रणवव्याहृतिपूर्वकां गायत्रीं त्रिर्जपित्वाऽश्वत्थस्य पश्चिमत उपविश्य सवत्सां धेनुमश्वत्थस्यच्छादनार्थं वासो द्वयं दत्त्वाऽन्येभ्यो ब्राह्मणेभ्यो भूयसीं दत्त्वा तथाऽष्टौ ब्राह्मणान् भोजयित्वा स्वयं सकृद्युतो भुञ्जीत ॥ इत्यश्वत्थोपनयनम् ॥

इतिपदवाक्यप्रमाणज्ञभट्टोजिदीक्षित सूरेः सूनुना भानुजिदीक्षित-विरचितो दानविवेकः समाप्तः ॥

लीखतं कल्ला सारंगधर पुष्करणा ज्ञातौ जोधपुर मध्ये। सवत १८८२ रा कार्तिक शुक्ल १५ भृगु दिने ॥ शुभं भवतु ॥

## 49/24841 शुद्धिप्रकाश

**Opening** ॐ श्रीगणेशाय नमः ॥

जय जय जगदम्बे !! नौमि ते पादपद्म
विधि मधुरद्वैष्वट्पदैर्नित्यजुष्टम् ॥
दिनकरकरलाक्षारञ्जितं सर्वरस्यं
भवभयहरनावं सत्यमेकं सुरेशे !! ॥ १ ॥
गणपतिजननीशे ! शम्भुजाये !! सुवक्त्रे !!!
शशधरदुरिंदभ्रज्वालनेत्रे ! त्र्यधीशे !!
मधुदुर (दर) दुरदाब्जं नाभिनालाब्जयोनिं
सकलसुरसमूहं ते तनुं नित्यमीड़े ॥ २ ॥
नत्वागुरुं गणेशंबालं ललितां परमाम्बां महिषीम् ॥
ज्वालानाथः कुर्वे ह्यदकया संग्रहप्रकाशं वे ॥ ३ ॥

इह खलु यद्यपि बहुषु धर्मशास्त्रेषु ग्रन्थेषु सत्सु रजस्वलायाः सर्वविषयकविचारः कृतः, तथापि, तेष्वितस्ततः प्रसरितत्त्वात् शीघ्रं बोधो न जायते. अतः इतस्ततः सङ्ग्रहं कृत्वा सर्वं सविधिपूर्वक सप्रकारं व्यस्तेन लेलिख्यते । तत्रादौ रजस्वला स्त्रीणाङ्गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः, स च रजोदर्शन दिवसादारभ्य षोड़शाहोरात्रात्मकस्तस्मिनृतौ युग्मासु रात्रिषु रात्रिग्रहणम्, दिवसप्रतिषेधः सम्विशेद्गच्छेत्पुत्रार्थम् । ऋतुपूर्वं कन्याविवाहः । तत्रयम:-'तस्मादुद्वहेत्कन्यां यावन्नर्तुमती भवेत्' ऋतुमती कदा भवतीति विवक्षायामाह—

अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी ॥
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

**Closing**

शुद्धिकरणे विधिः । देवयाज्ञिक निवन्धे–
यदा स्त्रियामुदक्यायां पतिप्राणान्परित्यजेत् ।
द्रोणमेकं तण्डुनानां अवहन्याद्विशुद्धये ॥
मुशलाघातैस्तदसृक् स्रवते योनिमण्डलात् ।
विरजस्का मन्यमाना स्वेचित्ते तदसृक् क्षयम् ॥
दृष्ट्वाशौचं प्रकुर्वीत, पञ्चमृत्तिकया पृथक् ।
त्रिशतिर्द्विशतिर्दश च गवां दत्वा त्वहः क्रमात् ॥
विप्राणां वचनाच्छुद्धा समारोहेद्धुताशनम् ।
नारीणां सरजस्कानामियं शुद्धिरुदाहृता ॥

इति निर्णये सिन्धावप्युक्तम् ॥

ध्यायेऽहं त्रिपुरां सदा सुमनसा त्रैलोक्यनाथाधिपां
वाह्याभ्यन्तरमानसा बहुविधं भूतादिदेवाभिधम् ॥
दुःख त्रैविधनाशिनीं त्रिजगतां स्त्रीयैस्त्रिमूर्त्यादिभि–
र्मन्त्रध्यानरसायनौषधिकरस्नानादि विद्योक्तिभिः ॥ १ ॥
मातृश्च[श्रु]सधर्मपत्नितनया पुत्रादिपूर्णं धनं
त्वं ह्येवासि ममेति सर्वगणिता मूलामनीषा स्मिता (स्मृता) ॥
तन्मात्राक्षसमस्तकार्यविषया नित्या स्वतत्रा यतः
सर्वाङ्गैः प्रणतिं करोमि सुभगे! सङ्गृह्य कृत्यं परम् ॥ २ ॥
ज्वालानाथ सुमिश्रबालिसुधिया कुर्वे प्रकाशाभिधं
त्रैगर्तस्थ सलोहग्रामसुजनः काशीनिवासस्सदा ॥
दृष्ट्वा मानवसंहिता प्रभृतयः ग्रन्थान्निबन्धांस्तथा
लोकानामुपकारणाय महते शुद्धिर्यतो कारणम् ॥ ३ ॥

**Colophon**

श्री इति श्री ज्वालानाथ मिश्र सारस्वत वालि कृत— धर्मशास्त्रे उदक्याः शुद्धिप्रकाशः समाप्तः ॥

## 74/24840 वर्षोत्सवनिर्णय

Opening

।। श्री राधाकृष्णाभ्यां नमः

सारस्वतमपि जात्या व्यक्त्या सरस्वती सरस्वन्तम् ।।
प्रद्युम्नचन्द्रमीडे शुकाधिकं वचनमाधुरी सुधया ।।१।।

आधायहृदि श्रीवंशीधरचरणाम्बुजमादरात् ।।
किशोरीप्रसादः कुरुते मासकृत्य-विनिर्णयम् ।।२।।

तत्रतावद्विविधाध्यात्मादितापतातप्यमानसाधुजनवृजिननिरसनप्रादुर्भूत-श्री कृष्णाविर्भावोत्सवस्य सकलोत्सवमूलत्वात्प्रथमं जन्माष्टमी विनिर्णीयते । तन्माहात्म्यं भविष्योत्तरे—

एकेनैवोपवासेन कृतेन कुरुनन्दन ।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।।
पुत्रसन्तानमारोग्यं सौभाग्यमतुलं लभेत् ।
सत्य-धर्मरतो भूत्वा मृतो वैकुण्ठमाप्नुयात् ।।

स्कान्देऽपि—

अष्टमी श्रावणे मासि कृष्णपक्षे यदा भवेत् ।
कृष्णजन्माष्टमी ज्ञेया महापातकनाशिनी ।।

Closing

शमीमन्त्रस्तु गोपथ ब्राह्मणे—

अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।।

तथा भविष्ये—

शमी शमयते पापं शमी लोहितकण्टका ।
धारिण्यर्जुन-शस्त्राणां रामस्य प्रिय-वादिनी ।।
करिष्यमाण यात्रायां यथाकालं यथा सुखम् ।।
मया तत्र निर्विघ्नकर्त्री त्वं भव श्रीराम-पूजिते ।।

तथा— गृहीत्वामाक्षतामार्द्रां शमी मूलगतां मृदम् ।।
गीतवादित्रनिर्घोषैरानयेत् स्वगृहं प्रति ।।
ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ।।
ततो रासोत्सवक्रीड़ां पूर्णिमायां प्रकल्पयेत् ।।
भूषयित्वा सितैर्वस्त्रै रचयित्वा स्वमण्डलम् ।।
चन्द्रज्योत्स्नासु विमले शुद्ध देशे सुमण्डले ।।
लालयेद्राधिका-कृष्णौ गायन् रासमहोत्सवम् ।।

वनक्रीड़ा प्रबन्धांश्च निशीथावधि कीर्तयेत् ।:
ततः स्वमन्दिरे देवीं समानीय सुभूषिते ।।
कुञ्जक्रीड़ाविधिं कुर्याद्गायेत्संस्थापयेच्च तौ ॥

नारदीये— यः कुर्याद्ब्राह्मणश्रेष्ठ ! रासक्रीड़ामहोत्सवम् ।।
तस्य चित्ते परां भक्ति यावदिन्द्रं प्रयच्छति ।।

इति । सा च राकामेव कार्या न त्वन्यत्र । अखण्डमण्डलस्येन्दोस्तत्रैव दर्शनात् । राकेशकररञ्जितमित्युक्तेर्युग्मदाक्वाच्च । अत्र चेत्प्रथमे यामे उपरागस्तदा पूर्व दिन एव सा । द्वितीयादि प्रहरे चेत्तदा द्वितीय दिन एव । न चोपरागे सूतक प्राप्तौ नैवेद्य सामग्री कथ समर्पणीया वचनाभावादिति वाच्यम् ॥

आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम् ।।
मणिकस्योदकं चैव न दुष्येद्राहुसूतके ।।

वारितक्रारिनालादि तिलदर्भै न दुष्यतीति वाक्यैस्तथाभूत सामग्र्या दोषाभावात् ॥

**Colophon** इति श्री सारस्वतजलनिधि कौस्तुभमिश्र श्रीजयकृष्णात्मज श्री किशोरीप्रसाद कृते वर्षोत्सवनिर्णये आश्विन निर्णयः समाप्तः ॥

## 97/24582 सुन्दरकाण्ड

## (वाल्मीकिरामायणीय)

॥ ॐ श्रीरामाय नमः ।। श्रीगणेशाय नमः ।। अथ सुन्दरकाण्ड प्रारम्भः ॥
वाल्मीकीये लिख्यते ।।

जयति रघुवंशतिलकः कौशल्याहृदयनन्दनो रामः ।।
दशवदन निधनकारी दाशरथिः पुण्डरीकाक्षः ।। १ ।।
नमस्तस्मै मुनीन्द्राय श्रीयुताय तपस्विने ।।
सर्वज्ञानाधिवासाय वाल्मीकाय नमो नमः ।। २ ॥
नमोऽस्तु रामाय सलक्ष्मणाय ।
तस्यै च देव्यै जनकात्मजायै ॥
निपातितं येन समस्त सैन्यं ।
तस्मै नमो दाशरथाय नित्यम् ।। ३ ॥
एवं तस्य ब्रुवाणस्य सर्वे ते वानरर्षभाः ।।
चक्रुः प्रणामं मुदिताः शक्रस्येव मरुद्गणाः ।। ४ ।।
तस्य पुष्पवती चित्रा वनमाला महात्मनः ।।
चक्रुस्ते वानरश्रेष्ठाश्चन्दनैरङ्गदादयः ।। ५ ॥
स तैः परिवृतः श्रीमान् वानरैर्वानरर्षभः ।।
आरुरोह गिरिश्रेष्ठं महेन्द्रमरिमर्दनः ।। ६ ॥

वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलम् ॥
लतावितान सच्छन्नं नित्यपुष्पफलद्रुमम् ॥ ७॥
मत्तद्विजगणैर्हृष्ट सलिलोत्पीड़सङ्कुलम् ॥
सिंह-शार्दूलचरितं मत्तमातङ्गसेवितम् ॥ ८॥
महद्भिरुच्छ्रितैः शृङ्गैरुल्लिखन्तमिवाम्बरम् ॥
सर्व सत्वालयं श्रीमत्सानुमन्तं समन्ततः ॥ ९ ॥
स तस्य शिखरे श्रीमान्महेन्द्रस्य महाकपिः ॥
विरराज महातेजाः द्वितीय इव पर्वतः ॥१०॥

Closing

अथ सुप्तान् हनिष्यामि एतद्धि मम रोचते ॥
महोदरोऽपि निर्भत्स्यं धूम्राक्षं वाक्यमब्रवीत् ॥२६॥
सुरक्षितं च रामेण लक्ष्मणेन च तद्वलम् ॥
वानरैश्च महावीर्यैः समन्तात्परिवारितम् ॥२७।
न तत्र गमनं युक्तं पुरगुप्तिर्विधीयताम् ॥
पूर्वमेतदभूत्कृत्यं परे पारे महोदधेः ॥२८॥
सेतौ च बध्यमानेऽपि विघ्नकाले निशाचरः ॥
साम्प्रतं त्वागते सैन्ये पुरस्ताद्व बलिनो वयम् ॥२९॥
शस्त्राणां कवचानाञ्च कृत्वा सम्यगुपार्जनम् ॥
तेषां दास्यमहे युद्धे हनिष्यामश्च तान् रणे ॥३०॥(१०३०)
एतस्मिन्नन्तरे वीरः परिगृह्य विपुलं भुजम् ॥
प्रतिकायो महाकायो रावणं वाक्यमब्रवीत् ॥३१॥
रक्षितव्या प्रजा राज्ञा रक्षितव्या द्विजातयः ॥
दृश्यवश्च निहन्तव्याः परिपाल्याश्च साधवः ॥३२॥
अन्यायेन न हर्तव्यं परस्वं राक्षसर्षभ ॥
एव यो वर्तते राजा चिरं पाति वसुन्धराम् ॥३३॥
रामेण विनयज्ञेन व्यलीकं च कृतं न हि ॥
जनस्थानगता येन तस्य भार्या त्वया हृता ॥३४॥
पतिव्रता महाभागा लङ्का किं वा प्रवेशिता ॥
अन्तः प्रवेशिता सा च उत्पाता दारुणा भृशम् ॥३५॥
कार्याकार्यं न जानीध्वं सर्व एव न संशयः ॥
बलेन गर्विता यूयं विनाशाय कुलस्य नः ॥३६॥
तन्मह्यं रोचते बुध्या सीतांरामाय दीयताम् ॥
परभार्यानुयुक्ता तु बलाद्धर्तुं निशाचराः ॥३७॥
सम्मान्य दीयतां तस्मान्मैथिली जनकात्मजा ॥
एवमुक्त्वातिकायस्तु तूष्णीं प्रस्थितवान् गृहम् ॥३८॥ हरिः॥

Colophon: इत्यार्षे रामायणे सुन्दरकाण्डे वाल्मीकीये मन्त्रिवाक्यं शतपञ्चतमो ।
Post-Colophonic ।। १०५ ।। सर्गः ।। इ संवत् १८८८ मार्गशीर्ष सुदी १४ ।।
।। राम राम राम राम राम ।।

## 105/ '4578 श्रीमद्भगवद्गीता
(पञ्चोलिटीका युक्त)

Opening

।। श्रीगणेशाय नमः ।।

ॐ शेषाशेषमुखव्याख्या चातुर्यं त्वेकवक्त्रतः ।
दधानमद्भुत वन्दे परमानन्दमाधवम् ।।१।।
श्री माधवं प्रणम्योमाधव विश्वेशमादरात् ।
तद्भक्तियन्त्रितः कुर्वे गीता व्याख्यां सुबोधिनीम् ।।२।।
भाष्यकारमतं सम्यक्तद्व्याख्यातृ–गिरस्तथा ।।
यथामति समालोक्य गीताव्याख्यां समारभे ।।३।।
गीता व्याख्यायते यस्याः पाठमात्रप्रयत्नतः ।
सेयं सुबोधिनी टीका सदा सेव्या मनीषिभिः ।।४।।

इह खलु सकललोकवन्दितचरणो विहितावतारः परमकारुणिको भगवान् देवकीनन्दनः तत्वाज्ञानविजृम्भितशोकमोहविभ्रंशितविवेकतया निजधर्मे त्यागपरधर्माभिसन्धिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार । तमेव श्रीभगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैः उपनिबबन्धा तत्र च प्रायश्रीकृष्णमुखनिस्सृतानेवश्लोकानलिखत् । कांश्चित्तत्र-सङ्गतया स्वय विरचयत् । यथोक्तम् गीतामाहात्म्ये—

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।।
या स्वय पद्मनाभस्य मुखपद्माद्विनिः सृता ।।इति।।

तत्र तावद्धर्मक्षेत्र इत्यादिना विषीदन्निदमब्रवीत इत्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसम्वाद–प्रस्तावाय कथा निरूप्यते । ततः परमासमाप्तेः तयोर्धर्मज्ञानार्थं सम्वादस्तत्र धर्मक्षेत्र इत्यनेन श्लोकेन धृतराष्ट्रेण हस्तिनापुरस्थितं स्वसारथिं समीपस्थं संजयं प्रति कुरुक्षेत्रवृत्तान्तं साक्षात्पश्यन्निव धृतराष्ट्राय निवेदयामास । धर्मक्षेत्रे इत्यादि ।।

यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्द्धरः ।।
तत्र श्रीविजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।।७८।।
हरिॐतत्सत् ।। इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे मोक्ष संन्यासयोगो नामाष्टादशमोऽध्यायः ।।१८।।

किम्बहुना ? यत्र येषां पक्षे योगेश्वरः सर्वयोगानामीश्वरः तत्रभवत्वात् सर्वयोगबीजभूतः कृष्णो विराजते, यत्र यस्मिन् पक्षे गाण्डीव धन्वा धनुर्द्धरः पार्थोऽर्ज्जुनो वर्त्तते तत्र श्रीः तस्मिन् पाण्डवानाँ पक्षे विजयः तत्र एव भूतिः राज्यलक्ष्मीः, विभूतिः श्रियो विशेषः, उत्तरोत्तरा वृद्धिः, ध्र वा अव्यमिचारिणी, नीतिः न्यायरीतिः (भवति इति) मे मतिः ।।७८।।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिः सृता ।।

Colophon:

हरि ॐ तत्सत् ।। इति श्री भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसम्वादे पञ्चोलीव्याख्यायां मोक्षसंन्यासयोगोनामाष्टा दशोऽध्यायः ।।१८।।

Post-Colophonic:

समाप्तेयं टीका पञ्चोली शुभमस्तु लेखकपाठकयोः ।।

संवत् १९१५ माघ सुदी द्वज (द्वितीया) पुस्तक साध हरीदासजी को साध गरीबदासजी को स्थान टांकड़ी को सत कबीर साहब राम राम राम राम राम ।। सत कबीर सत कबीर सत कबीर ।।

## 224/25084 सप्तसूत्रोपनिषत्

Opening

।। श्रीगणेशाय नमः ।। सव्यं । ॐ ब्रह्मास्तृप्यंतु । ॐ विष्णुस्तृप्यंतु । ॐ रुद्रस्तृप्यंतु । ॐ देवास्तृप्यतु । ॐ गायत्रीस्तृप्यंतु०

ॐ अविकाराय शुद्धाय नित्याय परमात्मने ।।
सर्वैकरूपरूपाय विष्णवे प्रभविष्णवे ।।(१)
जगदङ्कुरकन्दाय सच्चिदानन्द प्रापिने ।
गलिताखिलभेदाय महाशान्ताय वेदसे ।।० (२)

स शब्दवान् । मविद्या सबलं ब्रह्म । व्यक्ताव्यक्तान्महत् महतोहंकारः । अहंकारात्पंचतन्मात्राणि । पचतन्मात्राभ्यः पंचमहाभूतानि । पंचमहाभूतेभ्योखिलं जगत् । पंचमहाभूतानामेकैकं द्विधा विभज्य सार्द्धभागं बिस्तय (विस्तीर्य) । इतरेषु पञ्चधा पञ्चीकृतं पंचीकरणं भवति ।

CLOSING

ईशान्यदले गौरवर्णे यदा मिश्राम्यते मनः ।
तदा कृपा क्षमा ज्ञानं विज्ञानं च मतिर्भवेत् ।।(१)
संधि संधि मिश्रिता (त) वर्णे यदा विश्वाम्यते मनः ।
तद्देहगेहभज्जाड्यं त्रिदोषं च मतिर्भवेत् ।। (२)
मध्यदले श्यामवर्णे यदा विश्राम्यते मनः ।

तदा सर्वंगुणज्ञानं चैतन्यं च मतिर्भवेत् ।। (३)

ॐ ॐ मृत्युकोह जहं ॐ हसोहं हंस: इति शिखाछेदनमन्त्र: । ॐ ब्रह्मसूत्र एवं कर्ममोक्षणाय नारायणाय स्वाहा ।

**Colopho:** इति श्रीमत्सं (शं) कराचार्य विरचितायां सप्तसूत्रोपनिषत् सम्पूर्णं ।।

**Post-Colophonic** ।। सवत १७७३ वर्षे भाद्रवा वदि ११ भृगु । लीषतं देव गंगारामसुत गीरधर शुभं भवतु: कल्याणमस्तु: ।। श्रीरस्तु ।। कल्याणमस्तु ।।

## 226/23714 हस्तामलक सटीक

**Opening**

श्री शंकराचार्य्यं उवाच ।।
कस्त्वं शिशो: कस्य कुतोसि गंता
किं नाम ते त्वं कुत आगतोसि ।।
एतद्वद त्वं मम सुप्रसिद्धं
मत्प्रीतये प्रीति विवर्धनोसि ।।१।।

टीका—

श्री सच्चिदानन्दाय नम: ।। कस्त्वमिति स्पष्ट: ।।१।। नाहमिति स्पष्ट: ।।२।। निमित्तमिति । मन आदीनां मनोबुद्धिचित्ताहंकाराणां चतुर्णामन्त: करणानां तथा चक्षुरादीनां चक्षुत्वक् श्रोत्ररसनघ्राणानां पञ्चबुद्धीन्द्रियाणां वाक्पाणिपायूपस्थानां पचकर्मेन्द्रियाणां प्रवृत्तौ स्वस्वव्यापारे निमित्तं हेतुर्थ: सोहमात्मेति सम्बन्ध: । नित्योपलब्धिस्वरूपं यस्य तथोक्त: । दृष्टान्तमाह । रविरादित्यो यथा येन प्रकारेण प्रकाशकत्वेन लोकानां चेष्टायां परिस्पदे निमित्तं यथाधिष्ठातृत्वेन निमित्तं सोहमात्मेत्यर्थ: । इयं दृष्टिरात्मज्ञानोपायत्वेन दर्शिता । वस्तुतस्तु निराकृता अखिला निरवशेषा उपाधय बुद्धयादिलक्षणा यस्य स तथोक्त: । अतएव आकाशकल्प: आकाशवद्विशुद्धो य: सोहमात्मेति । यथा विशुद्ध आकाशे सह सवाभ्रमंडलं भूत्वा वलीयते तद्वदात्मनीदमखिलमिति भाव: । ३।।

**CLOSING**

उपाधौ यथा भेदतासन्मणीनां
तथा भेदता बुद्धि भेदेपि तेषु ।।
यथा चन्द्रकाणां जले चंचलत्वं
तथा चंचलत्वं तवापीह विष्णो ।।१४।।
।।इति श्री हस्तामलकमूलं समाप्तम् ।। श्री: ।।

टीका—

व्युत्पादितमर्थमुपसहरति । उपाधाविति । यथा सन्मणीनां शुद्धस्फटिक मणीनामुपाधौ सति भेदिता लोहितापीति कृष्णहरितादि भेद: । उपाधि-

वशाद्भेदः प्रतीयते न वस्तुनि गतेत्यर्थः। यथा च चंद्रिकाणां स्वार्थे कः चंद्र प्रतिबिम्बानां चञ्चलत्वं जलगतकम्पादि धर्मत्वम्। हे विष्णो! तथा इहात्र बुद्धौ तवापि चञ्चलत्वं दृश्यते। बुद्धिगतकर्तृत्व भोक्तृत्वकर्मास्त्वयि प्रतीयते परमार्थतस्तु नित्यमुक्तशुद्धबुद्धस्वरूपोसीति तात्पर्यार्थः ॥१४॥

Closing इति श्रीहस्तामलकव्याख्या समाप्ता ॥ शुभं भवतु ॥

Post-colophonic: लिखिता श्रीमन्नारायणात्मज बालानन्दशर्म्मणा। संवति एकोनविंशतिशते त्रयोदशाब्दाधिके (स. १९१३) मासि पौषे सिते पक्षे द्वितीयायां चन्द्रवासरे। श्री साम्बाय सदाशिवाय नमो नमः ॥ हरिः ॐ ॥

## 231/23686 आर्यवसुधाराधारणी स्तोत्र

Opening ॥60॥ श्री विघ्नच्छिदे नमः ॥ ऐं नमः ॥
संसारद्वयदैन्यस्य प्रतिहंतृ दिवावहे ॥
वसुधारे सुवाधारे नमस्तुभ्यं कृपामयि ॥१॥

एवं मया श्रुतमेकस्मिन् समये भगवान् कौशाम्ब्यां महानगर्यां विहरति स्म। कंटकसंज्ञके महावनवरे घोषितारामे महाभिक्षुसंघेन सार्द्धं पञ्चमात्रैः भिक्षुशतैः सँवरबहुलैश्च तपोधनैर्बोधिसत्वैः महासत्वैसर्वशुद्धधर्मगुणसमनुगतैः परिवृतः पुरस्कृतो धर्मं देशयति स्म। तेन खलु पुनः समयेन कौशाम्ब्यां महानगर्यां सुचन्द्रो नाम गृहपतिः प्रतिवसति स्म।

Closing ते च बोधिसत्वाः। सा च सर्वावती परिषत्। सदेवमानुपासुरगन्धर्वाश्च लोको भगवन्तोऽद्यापि अभ्यानन्दन्निति ॥ इत्यार्यवसुधाराधारिणी सम्पूर्णा सप्रभावा श्रेयस्करी सम्पद्यतामिति। इति वसुधारा मन्त्रपदानि सम्पूर्णानि ॥········ वाचकस्य वरदायिनी भूयात्। शुभं भूयात्। श्रीसत्यकाकुलदेव्यानुग्रहात् ॥

## 233/24045 वसुधाराधारणीकल्प

Opening ॥६०॥ संसारद्वयदैन्यस्य प्रतिहन्त्रि दिवावहे ॥
वसुधारे सुधाधारे नमस्तुभ्यं कृपामयि ॥1॥
एवं मया श्रुतमेकस्मिन् समये भगवान् कौशाम्ब्यां महानगर्यां विहरति स्म।

Closing भगवानाह। तेन हित्वामानन्द सुचन्द्रः गृहपतिः परिपृच्छतीत्यपि धारय सर्वधनधान्यमित्यपि धारय सर्वतथागतप्रसादात् वसुधाराधारिणी कल्पमित्यपि धारय इदमेवोचद्भगवान् आत्मनाऽऽयुष्मानानन्दः, ते भिक्षवः ते च बोधिसत्वाः

सा च सर्ववती परिषद् । सदेव मानुषा सुरगन्धर्वाश्च लोको भगवतो भाषितमभ्य-नन्दन्निति ।।ठ।। इति श्री वसुधारा समाप्ता ।। संवत १७२६ वर्षे कार्तिकासित दशम्यां कर्म्मवाट्यां पं. सुखचन्द्रेण लिखिता ।। श्रीव्यालपुरे ।।

## 412/23731 तीर्थपूजापञ्चाशिका

**Opening**

सर्वज्ञस्य प्रशस्त्यां ये पूजामाजन्मतन्वते ।।
तेषां परत्र सर्वत्र सुखं स्यात्शंखपूरवत् ।।३४।।

ये सर्वज्ञाः प्रजां तन्वते तेषां शँखपूरवत्सुखं स्यात् ।। तद्यथा ।। शंखपुरनगरे कश्चिद्वटुको प्रतिवसति स्म । स भिक्षाटनावसरे प्रतिगृहं शँखं वादयति स्म । ततस्तं जनाः शँखपूरं वदन्ति । अन्यदा तेन जिनालयो दृष्टस्तत्रापि प्रत्यहं भक्तिपूर्वकं शँख-पूरणेन नादपूजां करोति ततः कियत्कालेन मृत्वा नरकुन्दपुरे व्यवहारि सुतो जातः। वृद्धिमाप परिणीतः सविशेषं सुखी जातः ।। इति पूजा. शँखासुरकथा ।।

**Closing**

पूजापंचाशिकामेनां वाचयन्तु विचक्षणाः ।।
परोपत्ततयेशुद्धां शोधयन्तोऽक्षरश्रिये ।।१५।।

सुगमं ।। परमाक्षरश्रिये अक्षरं मोक्षोऽक्षराणि वर्णाश्च तत्श्रिय इत्यर्थः ।।

श्रीमत्पूर्णिमकाह्वगच्छपतयश्श्री पुण्यरत्नाह्वयाः
बह्वाचारविचारचारिभरिता राजन्ति सूरीश्वराः ।।५२।।
चक्रे शक्रनतक्रमाम्वुजयुग श्री तीर्थपूजामथो
तच्छिष्येण सुवोधवन्धुमधुरा पूजादिपञ्चाशिकाम् ।।५३।।

**Colophon:** इति पूजा पञ्चाशिका सम्पूर्णा ।।

**Post Colophonic** ।। संवत् १५४४ वर्षे ।। भट्टा. श्रीजिनरत्नसूरयः ।।
शिष्य संवेगहंसेनालेखि ।। श्रीमत् सलशुणपुरे ।।

## 437/24554 (2) सन्देह दोलावली

**Opening**

पड़ि बिंबिय पणयजयं जस्संहिरुहोरुम डरमालासु ।।
सरणागयं वनज्जइ तं नमि अजिणासरं वीरम् ।।१।।
कइवय सँदेह पयाण मुत्तरं सुगुरु संपयाएण ।।
वुच्छं मिछत्तमउ तमन्नहा होइ संसइयम् ।।२।।

**Closing**

ताइय अगार निवेयणाउ घम्मच्छ मन्नतिच्छम्मि ।।
बयणाउ अवव।एण तीएनमणा इ सुनदोसो ।।४६।।

इयकइ वयसं सदाएय पष्टुत्तर पयरणं समासेणम् ।।
भणिग्रं जुगपवरागं जिणवल्लहसूरि सीसेण ।।1५०।।
इति सन्देह दोलावली सूत्र सम्मत्तम् ।।छ।।
कृतिरियं श्रीजिनदत्तसूरि राजानाम् ।।श्रीरस्तु।।

**Post-colophonic:** ।। संवत् १६३० वर्षे वैशापसुदि ३ दिने बृहस्पतिवारे श्रीमज्जेसलमेरुमहादुर्गे ।। रावल श्रीहरिराजविजयि राज्ये ।। श्रीबृहत्खरतरगच्छे । श्रीजिन चंद्रसूरि विजयराज्ये । श्री सागरचंद्र सूरिसन्ताने । श्रीदेवतिलकोपाध्यायानां शिष्य-मुख्य श्रीविजयराजोपाध्याहानां शिष्येण पं. पद्ममन्दिरमुनिना लिपीकृता प्रति-रियम् ।। न. देवाणंदभार्या दाड़िमदे पुत्ररत्न न. अभयराजभार्या अमृतादे पठनार्थम् ।। पठ्यमाना श्रेयसेऽस्तु ।। श्रीरस्तु ।। श्री ।।

## 462/23722 क्षेत्र चूड़ामणि

**Opening**

प्राहैषीच्च बलं हन्तुं राजानं हन्त! पापधीः ।।
पयो हयास्यगतं शक्यं पाननिष्ठीवनद्वयम् ।।
दौवारिकमुखादेतदुपलभ्य रुषा नृपः ।।
उदतिष्ठत सङ्ग्रामे नेह तिष्ठति राजसम् ।।५४।।

**Closing**

श्रीरत्नत्रयपूर्त्याथ जीवन्धरमहामुनिः ।।
अष्टाभिश्च गुणैः पुष्टोनन्तज्ञानसुखादिभिः ।।१०२।।
सिद्धो लोकोत्तरमिख्यां केवलाख्यामकेवलाम् ।।
अनुपमामनन्तां तामनुवा भूयते श्रियम् ।।१०३।।
एवं निर्मलधर्मनिर्मितमिदं शर्मस्वकर्मक्षयैं
प्राप्तैं प्राप्तुमतुच्छमिच्छतितरां यौ वा महच्छोजनः ।।
सोऽयं दुर्म्मतकुञ्जरप्रहरणे पञ्चाननं पावनं
जैनधर्ममुपाश्रयेत मतिमान्निश्श्रेयसप्राप्तये ।।१०४।।
इति श्रीमद्वादीभसिंहसूरितिलकविरचिते क्षेत्रचूड़ामणौ मुक्तिश्रीलम्भनो
न।म एकादशो लम्भः ।।छ।।
राजतां राजराजोऽयं राजराजोमहोदयैः ।।
तेजसा वयसा सूरः क्षेत्रचूड़ामणिर्गुणैः ।।1।।

**Colophon:** इति क्षेत्रचूड़ामणिग्रन्थः समाप्तः ।। ग्रंथ संख्या १६६ ।।

**Psot-colophonic:** सं. १५४५ वर्षे पौपसुदि १० शनौ श्रीमूलसंघे बलात्कारगणे नन्द्याम्नाये सरस्वतीगच्छे श्रीकुन्दकुन्दाचार्यान्वये भट्टारक श्री पद्मनन्दि देवाः । तत्पट्टे भट्टारक श्रीशुभचन्द्र देवाः । तत्पट्टे भट्टारक श्रीजिनचन्द्रदेवाः । तच्छिष्य मुनिरत्नकीर्तिः । तत् सिष्वणी बाई मोल्ही इदं पुस्तकं न्यायवर्णिकर्म क्षयनिर्मित्तं सत्पात्राय प्रदत्तम् ।। शुभं भववेत् ।।

## 525/25092 भरटद्वात्रिंशिका

**Opening**

।।६०।।अर्हं।। देवदेवं नमस्कृत्य श्रीगुरुँश्च यथाश्रुतम् ।।
द्वात्रिंशद्भरटकानां लिख्यन्ते कौतुका कथा: ।।१।।

इह जगति सर्वैरपि श्रेयोर्थिभिर्निःश्रेयसा दीप्तये सदापि सदाचरण ज्ञाते प्रगुणे भाव्यम् । सदाचरण परिज्ञातं च पूर्वजन्माचरित यत् अबुद्धिकलिपत प्रवर्तमानार्थ-दर्शनेन व्यक्तीभवति । अतश्च तद् व्यक्ताय पूर्वाचरित परिहाराय भरटकद्वात्रिंशका प्रारभ्यते ।। यथा ।।

**Closing**

समे कार्ये हि सर्वस्य सर्वे सन्ति सहायका: ।।
विषमे न पुन: कश्चित् धनदश्रेष्ठिनो यथा ।।१।।

कुर्वन्ति कलहं मूर्खा: स्वभावेनापि जल्पिते ।।
पिण्डिते न समं यद्वन्मेघदृष्टौ जटी पुरा ।।१।।

देवरमण····(स्थाने) दिवाकर: पण्डितोऽभूत् । स कदापि प्राकृत भाषां वदति स्म । एकदा वर्षाकाले पण्डितोऽपरं पण्डितेन समं ग्रामाद्बहि देहचिन्तायोगोऽत्य-भूत् । यावता संपण्डिता: स्वगृहं प्रत्यागच्छन्ति तावतान्तराले मेघा: प्रचुरधाराभि-वर्षणे य विलग्ना:।·····················एवं कलहं कुर्वाणा: लोकै: कष्टेन वारित: । तत: पण्डितो हृष्टो गृहे जगाम ।। इति द्वात्रिंशतमी कथा ।। सं. 1603 वर्षे आषाढ़ शुदि १२ शनौ लिखितं वा. वीरसुन्दरेण शिष्य मंन्ना वाचनार्थं लिखेत् ।। लेखक पाठकयोश्चिरं जीयात् ।

## 530/24707 बलिनरेन्द्राख्यान

**Opening**

।। श्रीमदर्हते नमः ।। अस्तीह जंबूद्वीपे मेरो: पश्चिमायां दिशि गन्धिलावती नामा विजयस्तत्रनिवास: सर्वसम्पदां निलयो नि:शेष विलाशा(सा)नां गृहं समस्तसद्व्यवहाराणामनास्पदमशेषपापव्यापाराणां धाम धर्मकर्मणां वलयितं प्रांशुप्राकारेण दुर्गीकृतमति गम्भीरपरिखया समग्राश्चर्य निंकेतनमति विस्तीर्णमवनि-ताशिरस्तिलकभूतं त्रिविजयपुरं नाम नगरम् ।

**Closing**

उक्तं चन्द्र मौलिराजेन—भगवन् ! सर्तांह सम्यग्जिनधर्मो मम शरणं युष्मच्चरणसाक्षिक एव । भवतु किमिह विलम्बेन ? ततो मुच्यतामेषोऽपि जनो युष्मत्प्रसादेनमोहारि बल विडम्बनाभ्य: । ततो वलिकेवलिनाभ्यधायि—राजन्नंकिं तदेतद् युक्त मत: प्रहृष्टात्मना तेनापि चन्द्रवदनावधा (भा) तं स्वपुत्रमात्मपदे व्यवस्थाप्य कतिपयकलत्रमन्त्रिसामन्तादिसमन्वितेन प्रतिपन्नं तथैव विधिवद्धि-

भूत्या तदन्तिके व्रतं गृहीत्वा चाल्पदिनैरेव सर्वशिक्षा अधीतानि चतुर्दशापिपूर्वाणि समारूढ़ो गुणगणेपु समये च निवेशितकेवलिना स्वपदे गच्छतः आत्मनानुदेशो न चत्वारिंशत्पूर्वलक्षाणि सर्वपर्यायं परिपाल्य तदन्ते शैलशीकर वालेन मनोहारि वलस्य हत शेषं वेदनींयायुर्नामगोत्राख्य भवोपग्रादिकर्मचतुष्टयं निःशेष चारित्रधर्मसैन्यं सर्वमपि प्रकर्षवतीमुन्नतिं नीत्वा समस्त संसारदुःखप्रपञ्चविप्रमुक्तः सर्वशरीर सम्बंधं प्रविहाय सञ्जातोनिर्वृ तिपुरीपरमेश्वरो वलिर्महानरेन्द्रर्षिः केवलिरिति वलनरेन्द्राख्यानकं समाप्तमिति तत्समाप्तौ च प्रथमाऽनित्यता भावना समाप्ता ॥

## 574/24168 (4) रामचन्द्रस्तवराज

Opening ॥ श्री रामानुजाय ममः ॥ ॐ अस्य श्रीरामचन्द्रस्तवराजस्तोत्रमंत्रस्य सनत्कुमार ऋषिरनुष्टुप् छन्दः श्रीरामोदेवता सीताबीजं हनुमान् शक्तिः श्रीरामचन्द्रस्य प्रीत्यर्थे जपे विनियोगः ॥ सूत ऽवाच—

सर्वशास्त्रार्थ तत्त्वज्ञं व्यासं सत्यवतीसुतम् ॥
धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् ॥१॥

युधिष्ठर उवाच—

भगवन् ! योगिनां श्रेष्ठ सर्वशास्त्रविशारद ॥
किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम् ? ॥२॥
श्रोतुमिच्छामि तत्सर्वं ब्रूहि, मे मुनिसत्तम !

श्री वेद व्यास उवाच—

धर्मराज महाभाग ! शृणु वक्ष्यामि तत्त्वतः ॥३॥
यत्परं यद् गुणान्वितं यज्ज्योतिरमलं शिवम् ॥
तदेव परमं तत्त्व कैवल्यपदकारणम् ॥४॥
श्रीदामेति परं जाप्यं तारकं ब्रह्मसंज्ञितम् ॥
ब्रह्महत्यादिपापघ्न मिति वेदविदोविदुः ॥५॥
श्रीराम रामरामेति ये जपन्ति जनाः सदा ॥
तेषां भुक्तिश्चमुक्तिश्च भविष्यंति न संशयः ॥६॥

Closing

सकलगुणनिधानं योगिभिस्स्तूयमानं
नरकगतिहरं ते नामधेयं मुखे मे ॥
अनिशमतुलभक्त्या मस्तके त्वत्पदाब्जं
भवजलनिधिमग्ने रक्षमामार्तबन्धो ! ॥६६॥

रामरत्नमहं वन्दे चित्रकूटपतिं हरिम् ।।
कौशल्या शुक्ति सम्भूतं जानकीकण्ठभूषणाम् ।।१००।।

**Post-colophonic:** इति श्री सनत्कुमारसंहितायां न्रारदयुधिकिर सम्वादे श्री रामचन्द्रस्तवराजः सम्पूर्णम् ।। संवत १८५२ का मघे

## 760/23647 त्रिपुरा भवानी लघुपद्धति

**Opening**

।।६।। स्वस्ति श्री गणेशायनमः ।। श्री गुरवेनमः ।।

ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरणौप्रक्षाल्य निजासने समुपविश्य स्व-शिरसि श्वेतवर्णाधोमुखसहस्रदलकमलाकर्णिकान्तर्गत चन्द्रमण्डलोपरि स्वगुरुं शुक्लवर्णं शुक्लालङ्कारभूषितं ज्ञानानन्दमुदितमानसं चतुर्भुजं त्रिनयनं ज्ञानमुद्रा पुस्तकवरा भयकरं, वामाङ्गे वामहस्तधृत कमलया रक्तवसना भरणया स्वप्रियया दक्षभुजेनालिङ्गितं सर्वदेवदेवं सर्वतीर्थतीर्थं सर्वमङ्गलमङ्गलं परमशिव स्वरूपं ध्यात्वा तच्चरणकमलयुगलविगलदमृत धारया स्वात्मानं प्लुतं बिभाव्य मानसोपचारैराराध्य पादुकापूजनं कुर्यात् ।

**Closing**

ततो देवी समीपे खड्ग श्रीः वामे शक्ति श्रीः, तदधः वरश्रीः, अभयश्रीरीति संपूज्य संतर्प्य पुनरपि विन्दौ पूर्ववद् देवीं सम्पूज्य धूपादिकं तथैव दत्त्वा नैवेद्यादिना संतोष्य शक्तौ बलिदानादि विधाय गुरुं शिरसि, कुण्डलिनी मूलाधारै, स्वहृदि परमाम्वां ध्यायन् प्राणायाम ऋष्यादि करषड़ग्ड़ान्न्यासान्यिधाय मालया जपं यथाशक्तिकृत्वा पुनरपि प्राणायाम ऋष्यादिकरषड़ग्ड़न्यासान् कृत्वा गुह्याति-गुह्येत्यादिना जपं समर्प्य कवच सहस्रनाम स्तोत्रादि पठित्वा सामयिकैः साकं पात्रवन्दनादि विधाय श्री देवीं हृदि विस्तर्ज्य यथासुखं विहरेदिति शिवम् ।।

स्वानुग्रहावासपदैः साहिवकौलाभिधा श्रयैः ।।
तीर्थ्यार्थितैः कृता सैषा त्रिपुटा पद्धतिर्लघु ।।

**Colophon**

इति श्रीत्रिपुराभवानी पद्धति सम्पूर्णं समाप्तम् ।।
शिवं भवतु पाठकस्य । यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।।
यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ।।

**Post-colophonic:**

अथ शुभं संवत् १८१४ मासोत्तमासे माघमासे शुक्लपक्षे तिथौ वसन्तपञ्चम्यां तावत रविवासरे । लिखतं चौधरी प्रांननाथैसा । पोथीलिषी नारनौलमध्ये मंडी मैं ॥ शुभमतु ।।

## 795/23683 रघुवंश (रघुभाष्य)

॥६०॥ नमः सर्वज्ञाय ॥

**Opening**

तद्गुणैः तेषां रघूणां गुणैः कर्णं आगत्य चापलाय प्रचोदितः प्रेरितः कुलकम् ॥६॥ तंसन्तः श्रोतुमर्हन्ति० सन्तः साधवः तंअन्वयं वंशं श्रोतुं अर्हन्ति । किं. सन्तः सदसदव्यक्तिहेतवः, सच्च असच्च सदसदी । तयोर्व्यक्तिः सदसद्वयक्तिः तस्या हेतवः संदसद्वयक्ति हेतवः, हिनिश्रितं हेम्नः सुवर्णस्य विशुद्धिः श्यामिकापि अग्नौ वैश्वानरे संलक्ष्यते ज्ञायते ॥१०॥

**Closing**

तं भूतेऽर्थं प्रस० ॥ मौलेः सार्द्धं स्थविर सचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिष............व्याहता ॥

राज्ञी महिष्यौ मौलेः ॥ स्थविरसचिवैः सार्द्धं विधिवत् राज्यं अशिष्यत् शशास................यत् । राज्ञी आमौलिकुलक्रम........स्थविर सचिव वृषामात्यं विधिवत् शास्त्रोक्त..............अव्याहताज्ञा । अप्रतिहताज्ञा..........कीदृशी सिंहासनस्था सौवर्णसिंहासनोपविष्टा ।........प्रजानां भूत्यर्थं लोकानामुदयाय तंगर्भं दधाना सति बभौ शुशुभे । की दृशीनां प्रसव........कांक्षिणीनां । किंभूतं अन्तर्गुढं अन्तर्मध्य........क्षितिः पृथ्वी सस्यसम्पन्ना वीजमुष्टिं दधाना सति शोभते । शासु अनुशिष्टौ अथतन्यां प्रयोगः । मन्दाक्रान्ता वृत्तम् । सहोक्तिरलङ्कारः ॥५७॥ छ ॥ श्रीः ॥

**Colophon:**

शश्वत्सेविरुविश्वजननी श्रीकालिकाऽनुग्रहात्
संप्राप्याथ कवीन्द्रतां रघुकुले यौऽयुंक्त वाक्यामृतम् ॥
तत्काव्यं जगति प्रतीति जनको ह्येकोनविंशोऽन्तिमो
युक्तयाऽर्थेन जनार्दनेन घटितः सर्गो निसर्गोज्ज्वलः ॥छ॥

एकोनविंशतिमो सर्गः ॥
श्रीमदुरुप्रसादात्कल्याणं भूयात् ॥
श्री भुवनेश्वरी प्रसादात्कल्याणं भूयात् ॥

येनानुगृह्य हृदि विघ्नभयं निगृह्य
पूर्वंव्यधाय सकलं रघुकाव्य भाष्यम् ॥
येनानिशं श्रवणमेत्य विसेव्यतेस्म
सर्वत्र सप्रय त्याद्विद मिष्टदैवः ॥१॥
स्फूर्जद्यशो रायक वंश मौलि
श्री मन्महादेव तनूद्भवेन ॥

श्री विघ्नराजाश्रितविश्रुतेन
जनार्दने नेड्य जनार्दनेन ॥२॥
श्री मेदपाटान्वय भूषणानां
ज्योतिर्मुकुन्दस्य वपुर्भवानाम् ॥
मूलस्थकक्कोक सहोदराणां
हेतोश्च शिष्याधिकृत पण्डितानाम् ॥३॥
शुभं भवतु ॥

## 808/23659 आर्याशतक

**Opening**

॥ श्री गुरु श्री पादुकाभ्यो नमः ॥ श्री कामाक्ष्यम्बा श्रीपादुकाभ्यो नमः ॥ श्रीएकाम्रनाथ श्रीपादुकाभ्यो नमः ॥ श्री काञ्चीपुरी श्रीपादुकाभ्यो नमः ॥ श्री मूककविसार्वभौम श्रीपादुकाभ्यो नमः ॥ श्री मूककविसार्वभौम सुधासहचरीवाणी श्रीपादुकाभ्यो नमः ॥

कारण परचिद्रूपा काञ्चीपुर सीम्नि कामपीठगता ॥
काचन विहरति करुणा काश्मीरस्तवककोमलाङ्गलता ॥१॥

॥अन्व०॥ कञ्चीपुर० कारण० काश्मीर० काचनकरुणा विहरतीत्यन्वयः ॥१॥ ॥टीका॥ कारणाद् षट्त्रिंशत् तत्त्वतः प्रकृतितोतोवा परा कारण पर सा चासौ चिद्रूपा कारणपरचिद्रूपा, यद्वा कारणं सर्वजगद् हेतु भूतं परं परशिवाख्यं, चित् चैतन्यं, तदेवरूपं यस्याः सा, तथाविधा काञ्च्येवपुरं, काञ्चीपुरम्, तेस्य सीम्नि अन्तभागे, कामपीठगता कामरूपपीठे प्राप्त; काश्मीरं कुंकुमं, काश्मीर जन्माग्नि शिखमित्यमरः। तस्य यः स्तवको गुच्छस्तद्वत् कोमलाङ्गरुपालता यस्यासा तथाविधा काचन कापि सर्वदेवेभ्यः श्रेष्ठा अनिर्वचनीया करुणा, करुणारूपिणी जयति । जयति करूणा का चिदरूणा इति सौन्दर्यलहर्यां श्रीमत्या करुणा रूपत्वेनेति प्रतिपादनात् ॥१॥

**Closing:**

जय जय जगदम्बशिवे, जय जय कामाक्षि, जय जयाऽद्रिसुते !!
जय जय महेशदयिते ! जय जय चिद्गगनकौमुदीधारे !!९९!!

॥अन्वयः ॥ हेजगदम्ब ! हे शिवे ! त्वं जय जय, हे कामाक्षि ! हेऽद्रिसूते! त्वं जय जय, हे मशदयिते । त्वं जय जय, चिद्गगनकौमुदीधारे । त्वं जय जयेत्यन्वयः ॥ :॥९९॥ ॥टीका॥ कवि; स्वात्मानं कृतकृत्यं मत्त्वा स्वहर्षमुद्घाटयन् श्रीमतीं हर्षयति तद्यथा । हे जगदम्ब! जगन्यातर्जय जय सर्वोत्कर्षेण वर्तस्व । हे शिवे !

कल्याणरूपिणि ! त्वं जय जय । प्रसिद्धमुख्यनाम्ना संबोधयति । हे कामाक्षि ! त्वं जय जय । अनाद्यन्ताऽद्वयापि शिवे पत्यौ गिरौ चातिप्रेमवत्यतः सती चरितं, तदनु कुमारी पार्वती चरितं स्मारयँश्चावतारपत्वेन संबोधयति । हेऽद्रिसुते श्री गिरिराज-राजेश्वरकन्यके ! त्वं जय जय । अतएव महेशो दयितः प्रियः आत्मैव यस्याः सा महेशरूपपरमेश्वर एकाम्रनाथ कामेश्वरस्यापि दयिते प्रिये देहात्मरूपेवा त्वं जय जय चिच्चैतन्यमेव निर्लेपत्वात् अनन्तत्वात् व्यापकत्वात् पूर्णत्वादाधारत्वादवकाश-प्रदानत्वात् । गगनमाकाशश्चित्गगनं प्रकाशरूपाकाशस्तस्य. कौमुद्याश्चन्द्रिकायाः धारे, उत्तरोत्तरप्रवाहरूपे तस्मिन् वा, सच्चिदानन्दचन्द्रिके परशिवालम्बिनि, परशिवा-भिन्ने ! त्वं जय जय । वीप्साऽत्रहर्षे ॥ ९९ ॥

आर्याशतकं भक्त्या पठतामार्याकिटाक्षेण ॥
निःस्सरति वदनकमलाद्वाणी पीयूषधोरिणी दिव्या ॥१००॥

॥ अन्वयः ॥ भक्त्यार्याशतकं पठतां नृणामार्याकिटाक्षेण वदनकमलाद्वाणी पीयूषधोरणी दिव्या वाणी निस्सरतीत्यन्वयः ॥१००॥ ॥ टीका ॥ भक्त्यार्या छन्दसां शतकं आर्यायाः श्री शिवायाः स्तुतेः श्लोकशतकं वा पठतां पुरुषाणामार्याया श्श्रीकामाक्ष्याः कृपाकटाक्षेण वदनमेव कमलं तस्मात्पीयूषधो-रणी अमृतानुकारिणी दिव्या दैवी संस्कृतरूपा, श्रीमत्स्वरूपप्रकाशिनी वा वाणी सरस्वती निःसरति, निर्याति, प्रसरतीत्यर्थः ॥ १०० ॥

Colophon इति श्रीमूककविसार्वभौमविरचितं आर्याशतकं समाप्तम् ॥ इति श्री राज-राजेश्वर महाराजाधिराज महाराजमरुदेशाधीश राठोड़वंशावतंस योधपुरनाथ महाराज श्री श्री १०८ श्रीमानसिंहात्मजचतुर्ग्रामाधीशशिवराष्ट्रपुरपति श्री आन-न्दानन्दनाथनन्दाम्बाचरणाराधकहरिहरब्रह्मेन्द्रचन्द्रादिवन्दनीय श्रीमत्त्रिपुर-सुन्दरीचरणचञ्चरीक रावराजा श्री शोभनसिंहेन विरचिता श्रीमूककवि सार्व-भौमकृतशतकपञ्चकमध्यस्थ चतुर्थार्यशितकस्य सुवर्णमालाख्या टीका सम्पूर्णा ॥ श्री रस्तु ॥ श्रीः ॥

Post-Colophonic धाम्ने त्रिलोकधाम्नेऽपरिमित नाम्नेऽति चैत्याय ॥
प्रस्फुटललिता नाम्ने कारूण्याय लुभ्यते मम चेतः ॥१॥
रसब्धिनिधि भू (१९४६) संख्य शरद्यूर्जरमोत्सवे ॥
कौमुद्याख्येऽर्पिता स्वर्णमालाम्बांघ्रित रोजयोः ॥२॥

## 813/24178 गीत गोविन्द (रससन्दीपनीव्याख्यासहिते)

॥ श्री गणेशायनमः ॥

Opening श्रोनाथतनयेनाथ सूरिरत्नाकरेण वै ॥

श्रीकृष्णाराधिनीं नत्वा राधां वृन्दावनेश्वरीम् ।। १ ।।
गोविन्दं जयदेवं च गिरं नत्त्वा गुरूनपि ।।
व्याख्यानं गीतगोविन्दे क्रियते शिशुबुद्धये ।। २ ।।

श्रीजयदेव कविर्निर्विघ्नपरिसमाप्तये स्वचिकीर्षितप्रवन्ध आदौ मङ्गल-माचरति मेघैरिति ।।

मेघैर्मेदुरमम्बरं वनभुवश्श्यामस्तमालद्रुमै
र्नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ।।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्तियमुनाकूले रहः केलयः ।।१।।

राधामाधवयोः रहः केलयः एकान्तलीलाः सुरतरूपाः जयन्ति । सुरतं चाष्ट प्रकारकं तद्यथा- स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।।

सङ्कल्पोऽध्यवसायश्च क्रियानिवृतिरेव च ।।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।। इति ।।

सर्वोत्कृष्णत्वेन नमस्करणीयाः भवन्ति । राधा गोपी च माधवः कृष्णश्चराधा-माधवौ तयोः राधागोप्यांच विद्युति । विष्णुक्रान्तामलभ्योश्च चित्रभेदे च धन्वि नापिति विश्वः । राधाशब्दस्याल्पाक्षरत्वात्पूर्वनिपातः । पितुर्दशगुणं मातागौरवे-णातिरिच्यते । इत्यभ्यर्हितत्त्वाच्च । कथंभूतयोः इत्थं वक्ष्यमाण प्रकारेण कृष्णोक्तेन नन्दस्य निकटवर्तीर्यो यं देशस्तस्मान्नन्दसमीपात् यमुनाकूले अध्वकुञ्जद्रुमं प्रति चलितयोः अध्वनिकुञ्जः अध्वकुञ्जस्तस्यद्रुमस्तं प्रति । निकुञ्जकुञ्जौ वा क्लीबे लतादि विहितोदरे इत्यमरः । तमेव प्रकारमाह- हे राधे ! तत्तस्मात्कारणदिमं मल्लक्षणं जनं त्वमेव गृहं प्रापय । इतरनारी व्यावृत्या सम्भोगादि कर्मणि त्वमेव समुदिता भव । अत्र गृहशब्देन गृहिणी उच्यते । तामेव पुरस्कृत्य वनविहारदर्शनात् । 'न गृहं गृहमित्याहुर्गृहिणीगृहमुच्यते' । इति स्मृतेश्च । तदिति किं ? यतोऽय मल्लक्षणो जनो भीरूः कामवाणावलीं सोढुमशक्तः । मेघादीनां कामोद्यमकारित्वात् । उद्यतो हि कामोऽसंह्यमान् शरान् मुञ्चति । तत्सोढुम समर्थोऽयं भीरुः । तानाह । अम्बरं आकाशं, मेघैर्मेदुरं । त्रिमिदा स्नेहने । स्निग्धं वर्तते । सान्द्रस्निग्धस्तु मेदुर इत्यमरः । अपरं च तमालद्रुमैर्वनभुवः श्यामाः वर्तन्ते । तमालस्तिलके खड्गे तापिच्छे वरुण-द्रुम इति विक्वः । नक्तं च वर्तते । एवं देशकालवस्तूनां असह्यस्मरहेतुत्वमुक्तं भवति । मेघैरिति बहुवचनेन अक्रममेव चेतसोऽन्यथावृत्तिः सूचिता । अम्बर मित्यावृते देशे स्वच्छन्दविहार शंका वैधुर्यम् । वन भुव इति बहुवचनेन नानाव-स्थरतक्षमप्रदेशबाहुल्यं सूचितम् । नायमिति स्वच्छन्द प्रच्छन्नकामुकयोग्यत्वं कालस्य सूचितम् । यमुनाकूल इति रतश्रम निरास हेतु शीतवायुद्भावः अयमिति रत्युद्रेका-दत्याकुलतया खाङ्गेष्वप्यौदासीन्यं सूचितम् । मेघादय उद्दीपने विभावाः ।

कश्चित्वेवं विख्यातवान् । इत्थंनन्दनिदेशतो नन्दाज्ञातो यमुनाकूलकुञ्जद्रुमं प्रति चलितयोः राधामाधवयोः केलयो जयन्ति । इत्थमिति किं ? राधा काचन गोपिका तत्संबोधनं हे राधे ! इमं मम शिशुं रात्रौ भीरुं त्वमेव गृहं प्रापय । त्वय्येव मम विश्वास इति नन्दवचनं । अत्र नायकशिशुत्वेन परवशत्वम् । राधाया धात्रीत्वं नन्दस्य दूतीत्वं च । शृंगारयिभावानां भयानक हेतुत्वं कवि निरूपितरसस्यान्यथात्वं च । धात्री योगान्नशृङ्गारो, न हास्यो, रहसीङ्गितौः न भयानकता । तस्माद्रसः कोऽत्रावतिष्ठताम् ? तस्मादाद्यमेवसुन्दरम् । सुरतगोपनादियं गुप्ता नाम परकीया नायिका । न च निषिद्धपरकीयास्त्रीभजनपर माधवकेलिस्मरणमपुरुषार्थः पर्यवसायीति शङ्कनीयम् ।

स्तेयं हरेर्हरति यन्नवनीतचौर्यं
जारत्वमस्य गुरुतल्पगतोपराधम् ।।
हत्यां दशाननहतं बहुपानदोषं
यत्पूतनास्तनपयः स पुनातु कृष्णः ।

इत्यादि वचनशतेभ्यस्तच्चरितस्य परमपुरुषार्थपर्यवसायित्वनिश्चयात् । तदेतदसम्प्रदायतो व्याख्यानम् । परमार्थतस्तु नन्दनिदेशतो नन्दाइति इति व्याख्यानमुपपन्नम् । लक्षणादेराश्रयणस्यान्याय्यत्वात् । एवं गृहं प्रापयेत्यपि यथाश्रुतमेव । मेघैरित्यादिभयहेत्वभिधानपुरस्सरं भीरुत्वस्वभावोक्तेर्यथाश्रुताया एवं न्याय्यत्वात् न चैवं राधायाः ।। १ ।।

Clossing

पर्यंकक्रुतनागनायकफणा श्रेणी मणीनां गणे ।
संक्रान्त प्रतिविम्ब संवलनया विभ्रद्वपुर्विक्रियाम् ।।
पादाम्भोरुहधारि वारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाकरोदुपचिताऽऽकूतो हरिः पातु वः ।।

पल्यंकीकृतो यो नागनायकः शेषः तस्य फटानां श्रेणीः पङ्क्तिस्तत्र यो मणीनां गणस्तत्र, सङ्क्रान्ता ये प्रतिविम्बास्तैर्या संवलना वपुः संख्यावृद्धिस्तया वपुषो विक्रियां प्राकृतभावपरित्यागं विभ्रद् दधत्………………

( अपूर्णः पाठान्तः )

## 833/24403 विद्वद्भूषण टीका

Opening:

। श्री गणेशाय नमः ।।

श्री कृष्णं विलसत्फुल्लपुण्डरीकनिभेक्षणम् ।।
वन्दे भक्तजनानन्दप्रदमाह (हि) तलक्षणम् ।।१।।
करोतु नः शर्म खगेन्द्र केतु—

गंजार्तिहारी घन.........मुकुन्दः ।।
चराचरेशश्छलितेन्द्रशत्रु–
र्जनावनार्थं झषरूपमैच्छत् ।।२।।

श्री मद्गिरिवरधरणं करणं सुखसम्पदां जगद्भरणम् ।।
दुरितौघदु:खहरणं कोमलचरणं विभावये शरणम् ।।३।।

तन्वाना निजसेवके मतितरं वीणोल्लसन्मानसा
मञ्जुस्फाटिकमालया द्युतिमती पद्मासनोद्भासुरा ।।
धन्या पुस्तकधारिणी सितगरुद्वाहा धृताभीवरा
राकाशीतलधामकान्तिधवलासाख्यागिद्राश्वरी ।।४।।
यत्पादाम्भोजनिध्यानं बुध्या च सृजयावहम् (म्यहम्) ।।
सदानन्दनिदा (धा) नं तान्नमामि गुरूनहम् ।।५।।

सत्काव्यस्तवनं चेति विद्वद्भूषणसंज्ञके ।।
ग्रन्थे प्रकरणान्यण प्रोक्तान्येकादशैव हि ।।११ ।

**Clossing:** ।। अथ विद्वज्जनमनोऽनुरञ्जनाय विचित्रार्थपदं पद्यसंग्रहंकर्तु कामाश्श्रीमद्गुरुचरणाः प्रारीप्सितग्रन्थे विघ्नवारणाय शिष्टाचारप्राप्तमिष्टदेवतानुस्मरणरूपं मङ्गलमाचरन्ति ।। कलयामीति ।।

।। १४६ ।। अपिच ।। निःशेषेति ।। प्रकृतिः शब्दधातुरूपा यत्र निःशेषलुप्ता निःशेषं लुप्ता तदर्थप्रकाशनं च कृत्यर्थप्रकाशनं कुर्वन् प्रत्यय एव जार्गति प्रसिद्धो वर्तते तत्कीदृशं रूपमस्ति दूरात् एतावन्मया त्वां प्रति सृष्टम् ।

[ श्लोकस्यास्यटीकाविरलाऽपूर्णा प्रतिरियम् ]

## 854/24430 विलासमणिमञ्जरी (चतुरंगप्रकाश)

**Opening:** अथ विलासमणिमञ्जर्या उत्तरखण्डारम्भः । इतः प्रश्नोत्तरानुक्रमो विज्ञेयः ।।
।। श्री गणेशायनमः ।। अथ विजयानुक्रमः ।
प्रश्नोत्तराणि सर्वाणि सम्प्रवक्ष्याम्यनुक्रमात् ।।
तदनन्तरभेदास्तु ज्ञेयाः शिष्टप्रचारतः ।।

.......(अन्यस्थलेषु)

।। श्रीमते रामानुजाय नमः ।।
पद्माधीश पदाम्भोज परागाली पांसवः ।।
भूयासुर्भूयसे भूयः शुभायाभूतजन्मने ।। १ ।।
हेतावधिर्मुक्तमर्यादो त्रमसाहस्वगर्भितः ।।

आमूलं शोपितो येन जीयात्त्र्यम्बकदेशिक: ।। २ ।।
श्री बाजीसार्वभौमो निखिलगुणगणश्लाघनीय: कदाचि- ।।
द्रथ्यागारं प्रविष्टा: सकलवसुमतीमण्डलख्यातकीर्ति: ।।
सर्वै:सम्यैरुपेतो निजसचिववरं वृष्टिपीयूपवर्षै:
सिश्चत्प्रोवाच रम्याक्षरमधुरमिदं सर्वकार्ये कृतार्थ: ।। ३ ।।
हे धीर । त्वं वरेण्यो विमलतरमति: सर्वकार्येषु दक्षो
मानो मत्प्रीतिपात्रं····सपरममत: सर्वदेशप्रशस्त्यै ।।
ग्रन्थो भाव्ये नवीन: सकलजनहितश्चातुरङ्गप्रधानो
विद्वांसो राज्यसंघा: प्रमुदितहृदया: शेखरोऽयं वहन्तु ।। ४ ।।
श्री तिर्वतिपुरीशिष्टसंसेव्या यस्य जन्म भू: ।।
स इदानीमिहैवास्ते चिरमस्मानुपाश्रित: ।। ५ ।।
त्रिवेंगडाचार्य सुधी: कवीन्द्रो
दृष्ट्यादधानादिकलाविलोल: ।।
त्वत्प्रीतिपात्रं परमं ततस्त्वं
सुसंस्कृतं कारय पद्यजालै: ।। ६ ।।

ततस्तदा सुधाधीश भव्यचित्तानुसारिणीम् ।।
सदाशिव प्रधानो यां दिष्टां शैलीं विभावयन् ।। ७ ।।
चतुरंगविलासस्य तत्त्वं ज्ञात्त्वा तनोत्यसौ ।।
त्रिवेंगडाचार्यसुधीर्विलासमणिमञ्जरीम् ।। ८ ।।

**Clossing:**

चतुर्दशभिर्मटवन्धमाक्षिपति ।।
निजेभातृतीये नृपो भूपविज्ञि
द्वितीये मनुष्यो गज: सप्तम: स्यात् ।।
स्वकीयाश्वपष्ठे प्रधानं नृपोन्य:
प्रधानेन गेहे निजान्त्ये प्रधानम् ।।८।। भुजंगप्रयातम् ।।

**Post-colophonic:** ।। सं. १९२८ रा अश्व न व:दि ७ सप्तमीतिथौ चन्द्रवारे प्रथमप्रहरे नौवत बजतेरात्रो ।।
।। लि. पं. जीवेन ।। श्री बालूचर मध्ये गंगातटे श्री संभवनाथजी प्रसादात् ।।

## 884/25022 सारस्वतचन्द्रिका

ॐ नम: परमात्मने ।।

**Opening:**

सरस्वती सदा भक्तवाञ्छितार्थविधायिनी ।।
सदा वाग्विलाससन्दोहदोहा कामदुधामिव ।।१।।
नत्त्वा नागपुरीयाह्वतपोगणविभूषितम् ।।
श्री राजरत्नसूरिं चाख्यातव्याख्या विधीयते ।।२।।

युग्मं ॥ अथ ग्रन्थकारः आख्यातप्रत्ययान् विवक्षुः प्रतिज्ञां करोति । अथ आख्यातेत्यादि अथेति संज्ञा १ सन्धि २ विभक्ति ३ युष्मदस्मत् ४ स्त्रीप्रत्यय ५ कारक ६ समास ७ तद्धित ८ लक्षणाधिकाराष्टककथनानन्तरं आख्यातं नाम व्याकरणस्य नवमोधिकारस्तस्य प्रत्यया निष्पन्ते कथ्यन्ते आख्यायन्ते अर्थान्निष्पाद्यन्त इति ।।

**Closing**

साम्प्रतं तु तां हयग्रीवमूर्ति भद्राश्वखण्डे धर्मपुत्रो राजा भद्रश्रवा पूजयन्नस्ति पुराणोक्तिः कथंभूतो हयग्रीवः कमलाकरः कमलां लक्ष्मीं करोतीति कमलाकरः यद्वा कमलाया लक्ष्म्या आकारः वा कमलाकरे यस्य स पुनः कथं भूतः ह्यग्रीवः ईश्वरः ईष्टे ऐश्वर्यं करोतीति ईश्वरः पुनः कथं भूतो हयग्रीवः सुरासुर के पानीये जाते कजे पदावेव कजे भत्कजे सुराश्च असुराश्च नराश्च सुरासुरनराः त एव आकारो येषाभीदृशाः ये मधुपाः भ्रमरास्तैरापीते अत्यादरेणावलोविते यत्कजे चरणकमले यस्य स. ॥ इति श्री कृत प्रत्यय व्याख्या सम्पूर्णा । सुबोधिकायां सूरिश्रीचन्द्रकीर्तिभिः कृत्प्रत्ययानां व्याख्यानम् ॥

[ प्रशस्तिश्लोकाः अष्टौ ]

**Post-colophonic:**

इति श्री नागपुरीयतपागच्छाधिराज भट्टारक श्री चन्द्रकीर्तिसूरि विरचिता सारस्वतव्याकरणस्य दीपिका सम्पूर्णा ग्रंथाग्रं ७००० समाप्तेयं चन्द्रकीर्ति नाम्नी सारस्वत व्याकरण टीका सं. १७३६ वर्षे वैशाखे वदि १२ दिने सनिवारे ॥ पुस्तक-मिदं मौल्येनगृहीतं श्री भट्टराजेन ॥

यदि क्षर पभ्रष्टं स्वरव्यञ्जन यद्भवेत् ॥
तत्सर्वं क्षमतां वे (वै) प्रसीद परमेश्वर ॥१॥
यादृशं पुस्तकं दृष्ट्वा तादृशं लिषतं मया ॥
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ।.१।
मंगलं लेखकानां च पाठकानां च मङ्गलम् ॥
मंगलं सर्वभूतानां भूमे भूपति मंगलम् ॥३॥
भग्नपृष्ठकटिग्रीवा वद्धमुष्टि अधोमुखम् ॥
कठिनेन लिषशास्त्रं जत्तेन परिपालयेत् ॥४॥
तैलादिरक्षं जलादिरक्षं रक्षं सिथलवंधना ॥
मुर्ष हस्ते न दातव्यं एवं वदति पुस्तकम् ॥५॥ श्री श्री ॥

पुस्तकमिदं भटजी श्री कुसालिरामजीकस्य पत्राणि १०४० मौल्येन गृहीतम् ॥

## 102/23712 शब्दानुशासन टीका (लघुढुण्ढिका)

**Opening**

॥६०॥ प्रणम्य श्री मन्महेन्द्रप्रभुसूरिगुरुक्रमः ॥
श्री हैमतद्धितस्यायं लिख्यते लघुढुण्ढिका ॥१॥

तद्धितोऽणादिः तदहित् तस्मै अणादिप्रत्ययाय हितः ताभ्यः प्रकृतिवृत्तिभ्यो हितो तद्धितः । अण आदिर्यस्यासौ अणादिः । उपगता गौर्यस्यासौ उपगुः । गोश्रते ह0 उपगोरपत्य उपगवः ।

**Closing**

दोरप्राणिन इत्यप् वावः । तालस्य विकारः अनेन अनेनण धातुभिश्च ततो लुप् । तालस्य विकारो दोरप्राणिन इत्यनेन मयट्, त्रपुः पत्रपुश्च जतुश्चतत्तस्मात् । ५१ प ११ अन ११ व ११ विकारे परसिद्ध एव नित्यत्वात् स्वयंभू इत्यवादेशं वाधित्वा पोठार्थवचनं ।। छ ।।

## 912/23753 षट्कारकादिविवेचनसंग्रह

।। श्री सीतारामाभ्यां नमः ।।

**Opening**

ध्यात्त्वा स्वीयगुरोरंघ्रीः नत्त्वा च यदुनन्दनम् ।।
क्रियते शिशुबोधार्थं कारकादेः विवेचनम् ।।१।।

।। अथ षट्कारकाणि निरूप्यन्ते ।। किं तावत् कारकत्त्वं, क्रिया अन्वयित्वंका, रकत्व यस्य क्रियायां साक्षात्सम्बन्धेन यत्तदेव कारकत्वमित्यर्थः । तच्च षड्विधम् ।

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।।
अपादानाधिकरणमित्याहुः कारकाणि षट् ।।१।।

**Closing**

क्रिया पराणां क्रियापरेषु वा भगवदाराधकः श्रेष्ठः, गवां गोषु वा कृष्णा गौः सम्पन्नक्षीरा नृणां नृषु ब्राह्मणः श्रेष्ठः, छात्राणां छात्रेषु वा मैत्रः पटुः । कृत्ययोगे वा षष्ठी । रामस्य रामेण वा गन्तव्यालंकास्वाम्यादि योगे षष्ठी सप्तम्यौ । गवां गोषु वा स्वामीरधिपतिरित्यादि क्रिया चेत् क्रिया लक्ष्या तत्रापि सप्तम्यपि खादति-रामो वनमगात् मध्या च मतिना चेत्यलं कारकोपारकविवेकसंक्षेपः ।।

मन्दानामुपकाराय तुष्टये विदुषामपि ।।
पुराणोक्तीः समादाय नवीनः संग्रहः कृतः ।।१।।

।। श्री रामः ।। श्री रामः ।।

## 920/24804 अनेकार्थसमुच्चय

।। श्री गनपतये नमः ।।

**Opening**

पाकोत्तीर्णसुवर्णरुचिरच्छायं वसानोम्बरं
भास्वत्कौस्तुभकान्ति····परिभ्रा जिष्णुवक्षस्थलः ।।
शंखं चक्रमसिं गदामविरतं विभ्रच्चतुर्भिः करै—

राख़्ढो गरूड़ं नवीनजलदश्यामो हरिः पातु वः ॥१॥

पूर्वाचार्यप्रसादेन विदित्वा शब्दविस्तरम् ॥
क्रियते शाश्वतेनायमनोर्थसमुच्चयः ॥२॥
स्फुटार्थपदविन्यासः शिशूनां प्रतिपत्तये ॥
कृतोऽयं न प्रबुद्धानामतः क्षाम्यन्तुसूरयः ॥३॥
...ज्ञानार्थमज्ञानां सन्तोषार्थं विजानताम् ॥
श्रमो मम न तु ज्ञानबलगर्वितचेतसाम् ॥४॥

**Closing**

निषेधवाक्यभूषायां जिज्ञासायां मतं खलु ॥
विस्तारेंगितावूरी निर्दिष्ट उररी तथा ॥
कार्त्स्न्ये शीघ्रोभयामित्र समीपे क्षुभितोमतः ॥
प्रश्नावधारणानुज्ञाऽनुनयेषु मतं ननु ॥

[ इतोऽग्रे पाठभङ्गः ]

## 935/24699 मातृकाकौमुदी

॥ श्री गणेशाय नमः ॥

**Opening:**

वर्णाः पञ्चशता स्वादिविभक्तैर्व्याप्तविग्रहा ।
वाक् प्रसादाय मे भूयान्मातृका विश्वमातृका ॥१॥
वर्णनिबन्धमालोक्य समुद्धृत्याऽऽगमान्तरात् ॥
वर्णाभिधानं विदधे श्रीविनायकशर्म्मणा ॥२॥
ॐ ॐकारो ध्रुवस्तारस्त्रिमात्रो वर्तुलस्त्रिकः ॥
वेदादिः प्रणवः पञ्चदैवतश्च त्रिदैवतः ॥३॥

**Clossing:**

शः शंखकस्त्रिधाकस्थो मन्मथः कुसुमायुधः ॥
कामरूपः कामरूपी सौख्यदाता शुचिर्वकः ॥

( इतोऽग्रे पाठविच्छित्तिः )

## 970/24472 रत्नपरीक्षा

**Opening:** ॥६०॥ अथ रत्नपरीक्षा ॥

तुला पुरुषादिकं दत्त्वा रत्नभेद दिदृक्षया
चक्रे वंशेश्वरः श्रीमान्विचित्रां रत्नदीपिकाम् ॥१॥
निर्मथ्यान्य शैलेन नवरत्नमिहोद्धृतम् ॥

## 1008/23904 वैद्यजीवन दीपिकाटीकासह

॥ श्रीगणेशाय नमः ॥ श्री धन्वन्तरये नमः ॥

नत्वा शिवं च रञ्जाम्बां ताम्रकोणेरि संज्ञितम् ॥
वैद्यजीवनकाव्यस्य दीपिकां प्रतनोम्यहम् ॥१॥

ग्रन्थकृद्विशिष्टशिष्टाचारपरिपालनाय ग्रन्थादौ मङ्गलमाचरति–

प्रकृतिसुभगपात्रं प्रीतिपात्रं रमायाः
दिशतु किमपि धाम श्यामलं मंगलं वः ॥
अरुणकमललीलां यस्य पादौ दधाते
प्रणतहरजटाली गांगरिंगत्तरंगैः

॥ व्याख्या ॥ इति तत्किमपि अनिर्वाच्यं धाम तेजो निराकाररूपं वो युष्माकं मंगलं दिशतु । मंगलं श्रेयसे इति विश्वः । दिश्अतिसर्गे आशिषि लोट् । तस्य निराकारस्य सकारत्वमाह । किं विशिष्ट धाम । प्रकृति सुभगगात्रं, प्रकृत्या स्वभावेन सुभगानि सुन्दराणि गात्राण्यवयवा यस्य तत् । प्रकृतिः सहजे यो नादमात्मनि परमात्मनि किं भूतं धाम प्रकृतिः परमात्मरूपं पुनः किं विशिष्टं प्रीतिपात्रं रमायाः लक्ष्म्याः प्रीतिपात्रं प्रीतियोग्यं भाजनं पुनः किं विशिष्टं श्यामलं श्यामवर्णं रामाख्यं कृष्णाख्यं वा उक्तं च दशरथतनयं श्यामलं शान्तमूर्तिमिति अथवा श्यामलं स्वस्थं श्यामलं मेचके स्वस्थे इति विश्वः ।। तत्कि यस्यपादौ चरणावरुण कमललीलामारक्तकमलशोभां दधाते धारयतः क्व ? प्रणतहरजटाली गंगारिं– गत्तरंगैः प्रणतो यो हरश्शंकरस्तस्य जटाली जटा पंक्तिस्तस्यां यो गगांसम्भूताः रिंगन् क्रीड़न् दस्तरंगंगस्तत्रगागस्तु गंगासम्भूत इति विश्वः । आलीत्यत्र वह्वादिभ्य श्चेति ङीप । मंगलान्तरमाह ।

अतनुज्वरपीड़िताऽसि बाले । तव सौख्याय मतो ममोपवासः ॥
रसमर्पय वैद्यराज नाहं भवदावेदित लंघने समर्था ॥१॥

इति श्रीमत्कोणेरि भट्ट बैद्य पुत्र रुद्रभट्टवैद्यविरचितायां वैद्यजीवनटीकायां दीपिकायां पञ्चम उल्लासः समाप्तः ।·५॥

**post-colophonic:** संवत् १८३१ वर्षे श्रावण शुदी १५ रवौदीने श्री उदेपुर नीवासी श्री गीपूंरमध्ये मेदपाटज्ञाति दीक्षत वल्लभात्मज दीक्षत शंकरदत्तेन लेषनीयम् इदं पुस्तकम् । ॥ श्रीरस्तु ॥ दीक्षत शंकर सुत कमलनैंण शारंगधर श्रीधर पठनार्थं इदं पुस्तकम् ॥

मग्नपृष्ठकटीग्रीवा बधमूष्टीरधोमुखम् ॥
कष्टेन लीपीतं ग्रंथ यत्नेन प्रतिपालयेत् ॥१॥

जैलद्दक्ष तैल द्दक्षं न द्दक्षं शीथलवन्धनात् ॥
मूर्ष हस्ते न दातव्यं एवं वदति पुस्तीका ॥२॥

शुभं भवतु ॥ कल्याण मस्तु ॥
जे वांच तेनें नमस्कार छे। ए ग्रंथ मेवाड़ा दीक्षतं शंकर लीषीतम् ॥
वैंद्यजीवन ग्रंथः । शारंगधर पठनार्थम् ।

## 1011/23914 वैद्यजीवन

**Opening**

॥ श्रीगणेशाय नमः ॥

सकलसुखनिधानं भुंक्तिमुक्तिप्रदंय–
ज्जयति जगति सिद्धैस्सर्वदोपास्यमानम् ॥
करकलितकराब्जा भीतिखड्गप्रसन्नं
दिशतु फलमभीष्टं श्यामधामाऽम्बिकायाः ॥१॥

अनन्तनामा हि दिगन्तकीर्तिः
श्रीगौड़वंशः प्रथितप्रभावः ॥
तदात्मजः शंकरनामधेयः
शास्त्रेपु काव्येपु परं प्रवीणः ॥२॥

राजाधिराजो जयसिंह वीरः
ख्यातः प्रथिव्यां महनीयकीर्तिः ॥
प्रतीपभूपालनिवारणेन
प्रताप पुञ्जज्वलदग्निकल्पः ॥३॥

तदात्मजो रामसमानसारो
नाम्ना चिरायुर्नृपरामसिंहः ।।
रूपेण दानेन पराक्रमेण
तिरस्कृतानसुरद्रुमेन्द्र ।।४।।

दानं यदीयं परिकल्पितं यद्
दृष्ट्वैव सेन्द्राः सुरपादायद्याः ।।
मानं परित्यज्य विमृश्य बुद्ध्या
स्थितिर्निजामेति दिवं प्रयातः ।।५।।

क्षेमस्य योगस्य च मे विधातु-
स्तस्याऽऽज्ञया ग्रन्थकृतादरेण ।।
ये ये प्रयोगा बहुशोऽनुभूता-
स्ते ते मया संलिखिता विमृश्य ।।६।।

प्रणम्य मान्यान्विनिवेदयामि
ग्रंथं मुदा पश्यत सावधानाः ।।
दृष्टे यदस्मिन् परमप्रमोदो
भवेत्तथासिद्धिरपि प्रकृष्टा ।।७।।

हारीतपाराशरसंश्रुतीनां
संगृह्य सारं विधिवत्समासात् ।।
सौख्याय रोगार्दितमानवानां
विधीयते वैद्य विनोद एषः ।।८।।

Closing भट्टानन्तात्मजस्यायं शंकरस्य कृतिः सताम् ।।
आनन्दयतु चित्तानि चिकित्सासिद्धिदायिनी ।।१।।

श्रीमद्भूपतिरामसिंहवचनाग्रन्थो मया निर्मितो ।
यस्मिन्रोगविनिश्चयश्च कथितस्तादृक् चिकित्साक्रमः ।।
योगो वृष्यतमो रसायनविधिः संशोधनादिर्विधि- ।।
र्वास्तिर्नावनधूमपानकवला व्योषादि संज्ञा तथा ।।२।।

**Colophon:** ।।इति श्रीमदनन्तभट्टात्मजभट्टशंकरविरचिते वैद्यविनोदे निदानचिकित्सा वृष्य-रसायन-जलयोग-वमन-विरेचनानुलोमनादिभेद-क्वाथ-कल्पनादिलक्षण- विलेपी मण्डादि घृततैलविधान-वस्ति-नस्य-धूमपान-गण्डूपविधिपरिभाष व्योषत्रिफला-पचमूल-लाक्षादिसंज्ञारसवीर्यविपाक-गुण उत्क्लेदादि लक्षण- केशकृष्णीकरण-युक्तायुक्तविचारोल्लास: ।।

**Post-colophonic:** संवत १६१० दाधीच वंशोद्भवभैरवशर्मणाऽऽकर्षितं हरिदुर्गे ।। विजयदश- म्याम् ।। भौमघस्त्रे ।।

### 1023/24394 करणकुतूहल

**Opening:**

।। श्री गणेशाय नमः ।

शम्भुस्वयम्भुवमहं प्रणित्य पूर्वं ।
नाम्युद्वहं विगतकर्मरजो वितानम् ।।
यो धर्मभूरुहधनो धृतवान् सुभव्यः
क्षेत्रेऽत्र बोधवपनाय महोक्षलक्ष्मः ।।१।।

यः शान्तकान्तवपुरागमयत् प्रवोधं ।
श्रीभव्यकैरवकुलं विनमत्कृपांकम्
पक्षद्वयोपचितभानुरभानुसङ्ग–
स्तं निष्कलङ्कमभिनम्य नमं मृगांकम् ।।२।।

सुरनरसमुचितमानः सन्मानं यदनुभावतो भवति ।।
वामातनयं वामं वामहरं तं समभिसृत्य ।।३।।

श्रीवर्द्धमान इह विश्वविवृद्धिमानः
कर्माभिजातिभिदुरो विदुरो दयालुः ।।
यो दुष्ट दुःख करिजात विघात हेतोः
सिहं दधौ विमनतां शिवशर्मणेऽस्तु ।।४।।

बाल्येप्यनुग्रहवनी कवि शंकरस्य ।
स्तन्येन वत्सलधिया वदतोऽनुवेलम् ।।
आपन्मतङ्ग भिदुरं दधति मृगारिं
सा शारदा मम सहा वरदास्तु देवी ।।५।।

गणपतिरगणितमानोऽवगणितविघ्नोऽपि मामवत्सततम् ।।
भ्रमरितसुरनरसेवितचरणसरोजद्वयो जयतु ।।६।।
गुरुवरमितिशयवन्तं श्रीमन्त हर्षरत्ननामानम् ।।
करणकुड्मलां वृत्ति नत्वा वक्ष्ये सयुक्तिकामेताम् ।।

**Closing**

जेलाख्ये खलु मन्त्रिणिप्रिय वृ.........प्रसक्तौ सति
मांगल्याद्रिकला १६७८ मिते गतवति श्री विक्रमे संवति ।।
प्राप्ते प्रोष्ठपदे विनायकतियौ दैत्येजवारे वरे
चक्रे श्री गुरुभावतः सुमतियुग् हर्षेण चैषा मुदा ।।३।।

ग्रंथाग्रं तु शतान्यस्य सार्द्धष्टादश संख्यया ।।
ज्ञेयं चेदकबाहुल्यान्न्यूनाधिक्यं न दोषकृत् ।।४।।

करणकुतूहलवृत्तावेतस्यां सुमतिहर्षरचितायाम् ।।
गणक कुमुदकौद्यां निर्णीतिश्चपर्वसम्भवः ।।५।।

**Post-colophonic.** इत्थंच लि. कृ. महोपाध्याय श्री उदयराजगणीनां शिष्योपाध्याय श्री हर्षरत्नगणीनां शिष्य श्रीसुमति हर्षगणि विरचितायां करणकुतूहलवृतौ गणककुमुद कौमुदी नाम्न्यांग्रहण सम्भवाधिकारोदशमः सम्पूर्णः । सं. १८१६ शाके १७३१ रा पोसबद १४ लिषतुं पं. उदैचन्द्रेण श्री जलंघर मध्ये । श्रेयसेऽस्तु । वाच्यमानं चिरं जीयात् ।।

।। श्रीरस्तु ।। सुमं भवतु ।।

## 1039/24534 चूडामणिसार

**Opening** ।।६०।। ॐ नमः सिद्धम् ।। श्री गुरुभ्यो नमः ।।

नमस्कृत्य परं देवं ज्ञानमूर्तिं सनातनम् ।
अव्यक्तं सर्वगं शान्तं व्योमव्यापिनमीश्वरम् ॥१॥

पुरा प्रोक्तमिदं ज्ञानमीश्वरेण महात्मना ।
चूडामणि स्वनाम्ना वै सद्यः प्रत्ययकारकम् ॥२॥

Closing

उत्तरैः शोभना नारी आधारे शत्रुरूपिणी ।
उत्तरे वर्धते मित्रं आधारे शत्रुतां व्रजेत् ॥६॥

उत्तरैस्तु प्रकुर्वीत लाभार्थे निरीक्षणादिषु ।
आधारैस्तु महाहानिः सेवाकाले तथैव च ॥१०॥

Colophon

॥ इति श्री चूडामणिसारे भट्टलक्ष्मणविरचिते धर्मनाम प्रकरणम् ४४ ॥
॥ समाप्तोऽयं ग्रन्थः ॥

## 1042/23819 ज्योतिषरत्नमाला

Opening

॥६०॥ स्वस्ति ॥ सूर्यादिनवग्रहेभ्यो नमः ॥

सृष्टिस्थितिसंहारकर्त्ता कालस्यरूपभृत् ।
तंमहेशमहं वन्दे राशिरूपस्थितं दिवि ॥१॥

नत्वा गणपतिं देवं भारतीं वाग् विशुद्धये ।
करिष्ये रत्नमालायाष्टीकां बालावबोधनीम् ॥२॥

Closing

पञ्चगव्यगजदानविमिश्रैं,
शंखशुक्तिकुमुदस्फुटकैश्च ।
शीतरश्मीकृत हंतृस्नान,
मेतदुदितं नृपतीनाम् ॥१८॥

पञ्चगव्य गजदान वि मिश्रैं............

[ इतोऽग्रे पाठान्तः ]

## 1045/24494 त्रैलोक्यप्रकाश

Opening

वरप्रेषित पृच्छायां तु पृच्छक एव मूर्तीकरणीयः । तस्य सम्बन्धि मित्रपुत्रादि पृच्छायां मूर्ति तस्तृतीयादिस्थानेषु शुभाशुभं चिन्त्यम् ।

**Closing** रवि वीक्षिते विलग्ने दिवा हृतं, चन्द्रवीक्षिते रात्रौ। छिद्रपती मर्तां गृहपतिः स्वामी चौरः तस्मिन् धनस्थे भार्या चौरः। सहजे भगिनीभ्रातृपदातिमुख्यश्चौरः। चतुर्थे मातृपक्षे चौरः। पञ्चमे पुत्रः पुत्रतुल्यश्चौरः। षष्ठे रिपुररि श्चौरः। अष्टमे श्चौर एवं:। नवमे पुरुषप्रायश्चौरः। लग्नेर्शसकलदृट्या लग्नं पश्यति सति चौरावकाश्ते नास्ते। तस्मिन् चौरोऽवकाशं न लभते दिग्वाच्या केन्द्रागतैरित्यादि प्रागपि विवृतमस्ति।

॥छ॥ ईति भद्रं ॥ शुभं भवतु ॥ श्रीरस्तु ॥

**Post-Colophonic:** संवत् १५४९ वर्षे फा(ल्गुन) शुदि १५ शनी तपोगच्छाधिराजश्रीलक्ष्मीसागरसूरि शिष्य पंडित शिरोमणि पं. साधुविजय शिष्य सोमविजय गणिनालेखि ॥ शुभं ववतु ॥

1048/24152 **नाहरचन्द्रज्यौतिष**

**Opening** ॥६॥ ॐ नमः ॥ श्रीसद्गुरुभ्यो नमः ॥

अर्हन्तं श्रीजिनं नत्वा नरचन्द्रेण धीमता ।
सारमुद्ध्रियते किञ्चिज्ज्योतिषक्षीरनीरधोः ॥१॥

सरस्वती प्रसादेन यंत्रकोद्धारटिप्पनम् ।
करिष्ये नारचन्द्रस्य मुग्धानां बोधहेतवे ॥२॥

गणेश्वरं गुरुं चैव शम्भुं सूर्यादिखेचरान् ।
नत्त्वा लिखेयं सज्ज्योतिः सारं शास्त्रानुसारतः ॥३॥

**Closing** पूर्वाचार्यैः प्रणीतं यत् निश्चयीकृतमाधुनैः ।
तत्सर्वमेकीकृत्यैव यलेख्य (म्लेच्छानां) पक्षपाततः ॥४४॥

मतं सर्वं मुनीनां च दृष्ट्वा त च्छास्त्र संग्रहात् ।
तुर्य प्रकरणेऽलेखि सर्वं साधारणं फलम् ॥४८५॥

**Colophon** इति श्री नारचन्द्रे ज्योतिः शास्त्रे सामान्यफलनिरूपणं चतुर्थं प्रकरणम् ॥४॥

संवच्छायकसायकै घ्रूवमहानात्मभिः सम्मिते ।
मासे माधवसंज्ञकस्य शितिके पक्षे दिने द्वादश ॥

ज्योतिर्विन्मुनि सम्मतान् श्रुततरान् ग्रन्थान्विलोक्यासक्तत् ।
शास्त्रं बाल हिताय चैवमलिखच्छ्रीनारचन्द्राह्वयम् ॥१॥

**Post-coloPhonic:** सं. १८९० ना वर्षे माघ सुदी ६ शुक्रे । लि. । क. । हुकमचंद्रेण । श्रीपालीमध्ये ॥ पं. । प्र. । भट्टजी श्री गंगारामजी हेतवे । श्रीरस्तु । लेखक पाठकयोर्भद्रं भूयात् ॥ श्री गौड़ीजी प्रसादात् ।

### 1053/23901 करणकुतूहल सटीक

**Opening** ॥६०॥ श्रीगणेशाय नमः ॥

श्रियं वाग्वादिनीं नत्वा गुरु गोत्रप्रसादतः ॥
करिष्यामि इमां वृत्ति ब्रह्मतुल्याग्रहा यथा ॥१॥

तत्रचायमाद्यः श्लोकः ॥ गणेशं गिरं पद्मजन्माच्युतेशानति १ व्याख्या भास्कराचार्याः गणेशादीन् देवान् भास्करा दीन् सूर्यादीन् ग्रहान्नत्वा नमस्कारं कुर्वन्ति । किं करोमि लघुप्रक्रियामतिलघ्वी प्रक्रिया । साघनीयानि ब्रह्मसिद्धान्ततुल्यग्रहा इति यादृशाग्रहाः ब्रह्मसिद्धान्ते साध्यास्तादृशा ग्रहा अनेन ग्रन्थेन साध्यत इति वस्तुनिर्देशनं क्रियते ।

**Closing** आसीतसज्जनवाम्नीति स्पष्टार्थः ।

कुतूहलस्य टीकेयं पूर्वाचार्येण भाषिता ॥
सर्वशास्त्रं विलोक्य········सुधिया कृतम् ॥२॥

**Colophon** शालिवाहनशाकोऽयं जीज्वालेषु चन्द्रस्य भाद्रवे शुक्ल पञ्चम्यां व्याख्या कृता महार्षिभिः ॥ इति कुतूहलस्य दशाधिकारटीका सम्पूर्णा ॥

**Post-colophonic:** ॥संवत् १७२७ शाके १५९२ प्रवर्तमाने उत्तरायने उत्तरगोलगते श्री-सूर्ये ग्रीष्म ॠतौ महामाङ्गल्यप्रदआषाढमासे कृष्णपक्षे ४ शनिदिने इदं पुस्तकं लिषतमस्ति योति श्री जीवराजात्मज जोसी श्रीवृन्दावन तत्पुत्र मुरलीधरेण लिखतं । ममात्मज चिरं हरदेव जैदेव वसुदेव पठनार्थम् । ॥ शुभंभवतु ॥ श्री ॥

औरंङ्गाबाद महाराजा श्री यशवन्तसिंहजीकस्य विजयकटके, जोसी-श्री योतकरायजीकस्य चरणारविदुनिकटे अध्ययन अध्यापनार्थम् ।

## 1057/23913 महासंहिता

**Opening:**

।। श्रीगणेशाय नमः ।। श्रीकालिकायै नमः ।।

मूर्द्धम्भोजसुरासुरेन्द्रनिकरस्फूर्जत्किरीटोल्लस-
ज्ज्योत्स्नाऽऽलीढ़पदारविन्दयुगलं तत्त्वस्वरूपो रविः ।
ब्रह्माण्डोदरसंस्थिताखिलजगद्ध्वांतस्य विध्वंसनं,
यःकुर्वन्निखिलं जगत्यनुदिनं पर्येतु कालात्मकम् ।।१।।

ज्योतिश्शास्त्रं समग्रं प्रथमपुरुषतः स्वर्णगर्भाद्विदित्वा
पूर्वं ब्रह्मा ततो पर्यखिलमुनिगणाः प्रार्थनायञ्चकार ।
तच्चेदं सुप्रसन्नं मृदुपदनिकरैर्गुं ह्यमध्यात्मरूपं-
शव्दं विश्वप्रकाशं ग्रहचरितमिदं निर्मलं ज्ञानचक्षुः ।।२।।

स्कन्धद्वयं धृतविचित्रमर्थं ।
गम्भीरमादावधुना यदुक्ता ।।
तत्संहिता स्कन्धमिदं तृतीयं ।
वक्ष्ये जगन्मोहननामधेयम् ।।३।।

**Closing:**

अष्टाविंशति संख्या वा सूक्तेन पुरुषेण च ।।
ओषवीन्विनिक्षिप्य साधयेऽमृतेनथ ।।६।।

दर्भासने गुरुः शिष्यं प्राङ्मुखं स्थापयेत् ।
ततः स्थापितेन जलेनैव स्नापयेत् । जातवेदसा ।।७।।

आचार्यं पूजयेद्विप्रं दैवज्ञं च विशेषतः ।।
गो भू हिरण्यवस्त्रादीन् ब्राह्मणेभ्यः प्रयच्छति ।।८।।

एवं शान्तिकरं कर्म कुर्यादायुः प्रवृद्धये ।।

इत्ति वृद्धवसिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां कूहूयोग विधाना-
ध्यायः समाप्तः ।। श्रीरस्तु ।।

कल्याणमस्तु ।। शुभंभवतु ।।

**Post-colophonic:**

संवत् १९३४ शके १७९९ वर्षे प्रथम ज्येष्ठ वद ११ बुधवारे श्री उद-

यपुर मध्ये । ब्राह्मण दसोरा अवटंक ज्ञाति नागर प्रश्नोरा लज्याशंकरेण लिखतम् । आत्मपठनार्थम् । पत्र संख्या अठ्यासी ८८ श्लोक सं. ।।शुभम्।।

।। श्रीकालिका भगवत्यै नमः ।।

## 1059/23995 मुहूर्त चिन्तामणि

**Opening:** ।।६०।। श्रीगणेशाय नमः ।। श्री आदि देवेभ्यो नमः ।। ऐं नमः ।।

कैलासे पूर्णराका- हिमकर-रुचिरे वीक्ष्य बिम्वं स्वकीयं
भूयो भूयोऽपिधावन्प्रतिभटकरटिस्पर्द्धया चण्डशुण्डः ।
मा धावत्वं त्वदङ्‌घ्रि प्रहृतिभिरभितो धूयतेऽसौ धरित्री-
त्यम्बा वाग्भिर्निरुद्धा कपटि करटिनः केलयो नःपुनन्तु ।।१।।

मुहूर्तचिन्तामणि संज्ञकस्य
स्वयं कृतस्य प्रमिताक्षराक्षाम् ।।
रामो विधत्ते विवृतिं प्रणम्य
विष्वर्करुद्रान्पितरौ गुरूँश्च ।।२।।

प्रारीप्सितस्यग्रन्थस्य निर्विघ्न परिसमाप्त्यर्थं शिष्टाचारानुमित-श्रुतिवोधित कर्तव्यताकं स्वाभीष्टगणेशदेवताशीर्वादरूपमङ्गलमिन्द्रवज्र-योपनिवध्नाति । गौरीश्रव इति ।

**Closing:**

वसिष्ठ :– यद्वास्तु पूजा रहितं त्वतद्वलिं ।
बलिं त्वनाच्छन्न गृहं विरूपम् ।।
कपाट हीनेन विशेद्यतस्तत् ।
सर्वापदामालयमेव तत्स्यात् ।।

तस्मात्सकपाटमुपरिष्टादाच्छादितं कृत्वा वास्तुपूजं दत्तवलिमेवगृहं प्रविशेत् । प्रवेशोत्तारविधिमाह श्रीपति :–

ततो नृपो विप्रसुहृत्पुरोधसः
शिल्पज्ञ- भूगोल- विदश्चलिङ्गिनः ।।

धनैश्च रत्नैष्वशुभिः समर्चयेत्
सदाथ दीनानुपुरवासिनस्तदा ॥१०॥

इति श्रीमान् दैवज्ञानन्तसुत श्री दैवज्ञ राम विरचितायां स्वकृत मुहूर्त-चिन्तामणिटीका प्रमिताक्षरायां गृहप्रवेशप्रकरणं दशमं सम्पूर्णम् समाप्तम् ।
॥ श्री पीताम्बरेभ्यो नमः ॥

ग्रन्थे स्वरूपाञ्जनबिन्दुरेफ- ।
मात्राविहीनं लिखितं मया यत् ॥
तत्सर्वमार्यैः परिशोधनीयं ।
प्रायेण मुह्यन्ति हि ये लिखन्ति ॥१॥

## 1063/24909 मुहूर्तरत्न

[पत्राङ्क द्वयतः]

वशिष्ठ :–

Opening:

ज्योतिश्शास्त्रं समग्रं प्रथम पुरुषात् स्वर्णगर्भाद्विदित्वा ।
पूर्वं ब्रह्मा तथोपर्यखिलमुनिगणप्रार्थनोच्चच्चकार ॥
तच्चेदं सुप्रसन्नं मृदुपदनिकरैर्गुह्यमध्यात्म रूपं ।
शश्वद्विश्वप्रकाशं ग्रहचरितविदा निर्मलं ज्ञान चक्षुः ॥१०॥

सिद्धान्त संहिता होरा रूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम् ॥११॥

Closing:

अष्टक्षण्यिङ्कगोपक्षास्त्रिरदाश्चक्रमोत्क्रमात् ।
चरखण्डोनिता युक्ता विनाड्योऽजादिकोदयाः ॥१३॥

शङ्कुयुतेष्टच्छाया मध्यच्छायोनिता भवेद्धारः ।
अहर्दलं शङ्कुहतं हार विभक्तं भवेत्स कालः ॥१४॥

[इतोऽग्रे पाठान्तः]

## 1072/24040 कामधेनुजातकपद्धति

Opening:

॥६०॥ श्री गणेशाय नमः ॥

विधि- हरीश- दिनेश गजाननं
द्रुहिणजां गुरुपादसरोरुहम् ।।
सकल- शास्त्र- विबोधनकारणं ।
परम- कारुणिकां तुलजां भजे ।।१।।

नानाग्रन्थाः जातकोच्चाः प्रसिद्धा
स्तेभ्यः सारं संगृहीत्त्वा विशेषात् ।।
कुर्वेऽहं तां पद्धतिं कामधेनुं ।
यस्यां सम्यङ् निर्वहस्स्यात्फलानाम् ।।२।।

[ ४३ बी. पत्रे. ]

**Closing**

दानान्यतो नाभसयुक् प्रवृज्या ।
निर्याणकं स्त्रौजनिनष्टजातके ।।
श्रीकामधेनौ नगरामसंख्या ।
अध्यस्य संज्ञा गदिता क्रमेण ।।५।।

अलिन्द्र- संस्थो विजयी गुणाढ्यः
श्रीमासुतोऽयं जयराम (नामा) ।।
श्री कामधेनौ जनि जातकस्य ।
विशेषतस्तद्रचनां चकार ।।६।।

धनस्य ते चेदतुलार्जनेच्छा ।
पूर्वार्जितानां सदसत्फलानाम् ।।
ज्ञातुं यदीच्छा नृपसेवनेच्छा ।
चेदस्ति सत्कामदुघां पठस्व ।।७।।

असम्पत्फलजन्तूनां अजन्मफलतद्विदाम् ।।
दुह्यतीत्यालये कामधेनुश्चिन्तास्ति काक्षितौ ।।८।।

भग्न पृष्ठकटि ग्रीवा एकदृष्टिरधोमुखी ।।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ।।९।।

।। इति श्री कामधेनौ जातके भट्ट श्री जयराम निवद्धं समाप्तम् ।।

## 1086/24132 जातकपद्धति

**Opening**

।।६०।। श्रीमद्गुरुभ्यो नमः ।।

नत्वा तां श्रुतदेवतां त्रिसमय ज्ञानोद्गतेः कारणं
तत्पादाम्बुरुहेप्रसादविकसद् बोधो बुधः श्रीपतिः ।।
शिष्यप्रार्थनया विचार्य सकलान्होरागमार्थान्मुहुः
वक्ष्ये जातककर्मपद्धतिमहं होराविदां प्रीतये ।।१।।

।।व्याख्या।। अहं श्रीपतिभट्टनामा द्विजः शिष्यप्रार्थनया जातककर्मपद्धतिं वक्ष्ये ।....

**Closing**

।।अथ ग्रन्थसमाप्तिर्वैतालीयेनाह—

इति जातककर्मपद्धतिं गुरुपादाक्षयुगप्रसादतः ।।
वरशिष्यजनप्रवोधिनीं कृतवान् श्रीपतिरग्रजाग्रणीः ।।११।।

।।व्या.।।अग्रजाग्रणीः अग्रजेषु ब्राह्मणेषु अग्रणीः श्रेष्ठः श्रीपतिराचार्यः श्री-गुरुपादाब्जयुगप्रसादतः जातककर्मपद्धतिं कृतवान्। कीदृशीं जातककर्मपद्धतिं वर-शिष्यजनप्रवोधिनीं वरः श्रेष्ठोशिष्यजनस्तं प्रबोधयितुशीलमस्यास्तीति। अत्र ग्रन्थ-श्लोकत्वंशज्ञानार्थं तथा प्रक्षेपज्ञानार्थंच ग्रन्थसंख्या शालिन्याह- अध्यायानामष्टके वृत्तिरिति. १२ ।।व्या।। अस्यां पद्धतौ अध्यायानामष्टके वृत्तसंख्या षट् त्रिचन्द्र प्रमाणा षट्त्रिंशदधिकशतं १३६ प्रमाणं यस्यास्तादृशी प्रोक्ता। अनुष्टुप् छन्दसा तु एकेन श्लोकेनाढ्यया द्वात्रिंशत्या ग्रन्थसंख्या प्रोक्ता तदुक्तं भवति यानि वृत्तानि वद्धानि सन्ति तानि षट्त्रिंशदधिकं शतमेव १३६ यदा तु द्वात्रिंशदक्षराणामेकः श्लोक इति गणनया ग्रंथसंख्या क्रियते तदा शतद्वयमेकं श्लोकाधिकं २०१ भवतीति इति श्री वल्लाल दैवज्ञात्मज श्रीकृष्णदैवज्ञविरचिते श्रीपतिभट्टीयजातकपद्धत्युदाहरणेप्रकी-र्णकाध्यायोष्टमः समाप्तोऽयं ग्रन्थः ।।

संवत १८३९ वर्षे शाके १७०४ प्रवर्तमाने माघमासे शुक्लेतर कृष्ण पक्षे प्रतिपदा १ कर्मवाट्यां तिथौ रविवासरे पुष्यनक्षत्रे प्रीतिनामा योगे कौलव करणे मेष लग्ने लिषतं श्री जालोर नगरे श्रीमत्तपागच्छे सकल पंडित प्रवर पंडित भाल-स्थलतिलकायमान पंडित श्री श्री १०८ श्री अमृतविजयगणी ततशिष्यपंडित श्री

१९ पं. श्रीदेवेन्द्रविजयगरिग तत् शिष्य पं. गरणपतिविजय लिखितं चतुर्मासिकस्थितेन ॥
श्री आदिनाथः नेमनाथः श्रीवर्द्धमान जिन पार्श्वजिन प्रसादात् संपूर्णीकृतं ।

**Colophon:**

तैलाद्रक्षेज्जालद्रक्षेत् रक्षेत् सिथिलवन्धनात् ॥
परहस्तगता रक्षेत् इत्थं वदति पुस्तिकाः ॥१॥ श्रीः छः॥

## 1091/23905 ज्योतिषकल्पतरु

॥ श्रीनृसिंहो जयति ॥

**Opening**

चित्त- ज्ञान- प्राण- बुद्धीन्द्रियाद्यै-
र्यत्सम्पर्कात्संचरद्भिः शरीरे ॥
यन्मायान्धोऽहंधिया भाति जीव-
स्तं सर्वेशं शौरिसूनुं प्रपद्ये ॥१॥

ग्रन्थारम्भे स्वस्य कर्तृत्वाभावमाविष्कुर्वन्निष्टदेवतां
प्रणम्य पुनरपि सर्वदेवस्वरूपेन प्रणमति—

एकोनेकतनुर्विभाति बहुधा ज्योतिर्जलादिष्विव
ब्रह्मेशेन्द्रदिवाकरेन्दुकुजविज्जीवादिरूपैः स्वयम् ॥
तत्तत्कर्मसु तारतम्य विधिना जीवेष्वनिष्टदो
यस्तस्मै जगदात्मने भगवते कृष्णायभूयो नमः ॥२॥

अथ ग्रन्थाभिधानादिकमाह—

ज्योतिश्शास्त्र महावनभ्रमणसंक्लेशप्रशान्त्यै द्विज—
व्रातानामिह पक्षनूतनलसन्नानाफलप्राप्तये ॥
ज्योतिः कल्पतरुं सुगम्यगहनं स्वेच्छाफलैरन्वितं
पूर्वाचार्य निर्दशितं बहुविधं सम्वर्द्धयाम्येकतः ॥३॥

बल साम्ये नैसर्गिकं चिन्त्यम् ॥ यथा शनि भौम बुध गुरु शुक्र चन्द्र सूर्या बलिनः । शनेः सकाशात् भौमो बली भौमादबुधइत्यादि लग्नबल साधने लग्नाधिप-

गुरूणां यावन्त्यो दृष्टयः लग्नं प्रति तावद्वलं प्राप्तं युक्तेंश्च केवलमिति....।
[ अग्रे पाठान्तः ]

## 1097/23715 ताजिकयोगसुधानिधि

।। श्री गणेशाय नमः ।।

अथैक्कबालाभिध इन्दुवार-
स्तथेत्थशालाभिध ईसराफः ।।
नक्तं तथोक्तं यमया मणऊच
कंवूलकं गैरिकवूलकंच ।।१।।

तथोक्तमुपसंहरति —

गतिमया गदिता खलु योगकाः
खगविलोकनतो हि यथामति ।।
स्वयमपीह विचार विशारदा
निजधिया सुधिया फलमुच्यताम् ।।३६।।

श्री भाद्रपद जलनात् कृतापात्तविद्यः
श्री यादवेन रचितेऽस्य गुरु प्रसादात् ।।
ताजीय योगसु सुधानिधिनामधेये
योगोक्तकानि विमलाऽचकला हि षष्टि ।।३७।।

इति श्री ताजिकयोगसुधानिधौ यादवसूरि विरचिते स्वकृत पठनार्थाविष्करणे त्रिंशयोगनिरूपणाख्यान षष्टि सम्पूर्णा ।।६।। श्रीः ।।

सं १७२५ का. शु. ९ नवम्यां श्री उदय प्रघोधाल्लिखितं मलारणा नगरे ।।

## 111/23703 भुवनदीपक टीका

।। श्री गणेशाम्बिकाभ्यां नमः ।।

सारस्वतं नमस्कृत्य महः सर्वतमोपहम् ।।
ग्रहभाव प्रकाशेन ज्ञानमुन्मील्यते मया ।।१।।

।। व्याख्या ।। सरस्वत्या सम्बन्धि सारस्वतं तच्च तन्महश्च तन्नमस्कृत्य मया ज्ञानमुच्यते प्रकटी क्रियते कथं भूतं महः सर्वस्यापि तमसोऽन्धकारस्य अपहारकं विनाशकं । केन होन्मीलित इत्याह ग्रहेति ग्रहाः सूर्यादयः भावाः मेषादयस्तेषां प्रकाशेन ।।१।।

श्री पद्मप्रभुसुरेन्द्रेणोक्तं भुवनदीपकम् ।।
कृतं विशेषकं वृत्त्या मया शोध्यं बहुश्रुतैः ।।९।।

श्रीविबुधगणपतिशिष्यः श्रीसिंहतिलकसूरीणाम् ।।
वृत्तिं विदधे देवी प्रसादसाह्लादविशदमनाः ।।१०।।

इति श्री विबुधचन्द्र सूरिशिष्य सिंहतिलकसूरि विरचिता श्रीभुवनदीपक वृत्ति समाप्ता ।। संः १७६४ वैसाख शुक्ला ११ एकादश्यां गुरौ तुलसीरामेण लिखतम् ।।

## 1137/24387 कृपासिन्धुप्रश्नतन्त्र

।।६०।। श्रीगणपतये नमः ।।

**Opening**

कृत्स्नं जगद्द्योतयति प्रभाते
पायादपायाद्भुविकर्म साक्षी ।।
राकापतिर्यत्प्रभवश्चविश्व-
मलंकरोत्येवमवाप्यतेङ्गः ।।१।।

श्रीदिननाथ निशाकर भौमचान्द्रिसुरेज्य भृगूद्भवसौरान् ।।
तानभिवन्द्य शुभाशुभहेतून् प्रश्नफलानि नृणामिह वक्ष्ये ।।२।।

जातक ताजिक शाकुन शास्त्रे यस्य सदभ्यसनं गुरुभक्तौ ।।
यस्य भवेद्गणिते समभिज्ञः प्रश्नकलासु पुमानधिकारी ।।३।।

स्वोच्चे दीप्तः स्वर्क्षगः सुस्थितः स्या-
न्मैत्रे हर्षी सौम्यवर्गेषु शान्तः ।।
शक्तः स्पष्टांशुश्च नष्टो विदीप्तः
पापैर्युक्तः पीड़ितः पापगोथ ।।
दुष्टो दीनो नीचगः स्याद्गृहेन्द्रो
वाच्यं विज्ञैः प्रश्नकाले ग्रहोच्चम् ।।४।।

**Closing**

अलौकिकाः दृष्टश्रुतादि वस्तु
पश्यन्नसम्भावितमेवमत्र ।।
शुभाशुभं वस्त्वनुसारतोहि
विचार्य वाच्यं विबुधेन सर्वम् ।।१८।।

## 1119/24391 रत्नावली-पद्धति

Opening : श्रीगणेशाय नमः ॥

ब्रह्मा प्रणामावसरप्रतीक्षी
वीक्ष्येति दक्षः सुरराजमन्त्री ॥
यद्द्वारि दूरात् कुरुते सुधीरं,
पुरन्दरं तं वरदं नमामि ॥ १ ॥

यस्य प्रसन्नस्य कृपा कटाक्षात्
पारं गतोऽहं गणितार्णवस्य ॥
वन्दे मुदा तं सुकृतावदातं
श्री ढुण्ढिराजं गुरुमात्मतातम् ॥ २ ॥

पूर्वैः कृता जातकपद्धतीनां
होरा प्रकारै रचनाविशेषः ॥
तथापि कुर्वे सरलां गणेशो
रत्नावली पद्धतिमुत्तमोक्तिम् ॥ ३ ॥

होराफलं सदसदाख्यफलावबोधः
सोपि ग्रहादिभिरिमे समयाच्चयन्त्रैः ॥
वेद्यस्ततो जननकाल इहस्फुटोऽतः
सिद्धान्ततः स्फुटतरा द्युचराः सलग्नाः ॥ ४ ॥

मध्याह्नकालावधिमध्यरात्रा-
त्तथा निशीथावधि वासरार्द्धात् ॥
पूर्वापरे गोलदले क्रमेण
स्यातामिदं गोलविदो वदन्ति ॥ ५ ॥

मध्याह्नकालावधिजन्मकालात्
प्राच्यां प्रतीच्यां नतमुन्नतं च ॥
तथा निशीथावधि नाडिकाद्यं
नतं खरामच्युतमुन्नतं वा ॥ ६ ॥

प्रागुन्नते स्पष्टसहस्ररश्मेः
प्रत्यङ्नते भार्द्धयुताच्च तस्मात् ॥
लंकोदयैः साधितमत्रलग्नं
भावो भवेद्भूतलसंज्ञकोऽयम् ॥ ७ ॥

अम्भोजिनीनायकवन्निशार्द्धं
विलग्नतो वा परिसाधनीयम् ।
तन्नाडिकाभिस्तत एव लग्न
लंकोदयैर्भूतलसंज्ञितोऽसौ ।। ८ ।।

**Closing :**

द्वयोर्बहूनां यदि चक्रहानिः
प्राप्ताभवेदेक-गृहस्थितानाम् ।।
आयुर्विभागं द्युचरो हरेद्यः
सत्त्वाधिकः सत्यमतेन सत्यम् ।। १८ ।।

आयुर्लवा हारहृताः फलानि
तेषां युतिः खेचरमानभक्ता ।।
एकर्क्षगानां बलिनोऽत्रहानि-
रित्थं मणित्थो हरिरप्युवाच ।। १९ ।।

युतिर्हराणां विभजेद् ग्रहाणां
मानेन हारोपचयो भवेत्सः ।।
ततः फलं देवल आह नून-
मनूनसत्त्वाम्बरचारिणोऽत्र ।। २० ।।

नन्देन्दवो बाणयमा दिनानि
सूर्याद् दिनानीन्दुयमा-नखाश्च ।।
इमाः समा आयुषि पिण्डसंज्ञे
सूर्यादिकानां परमोच्चगानाम् ।। २१ ।।

तथैव नैसर्गिकजीवितेब्दाः
सूर्यादिकानां परमोच्चगानाम् ।।
नखाधराद्वौ नवनागचन्द्रा
नखा नभो मार्गण-सम्मिताश्च ।। २२ ।।

प्रागुक्तमुच्चाह्वयकेन्द्रमेतद्
भागार्द्धकं जीवित-संज्ञकेन्द्रम् ।।
तदंशका वर्षहृताः स्वसंज्ञ-
मायुर्दिनाद्यं च ततः समाद्यम् ।। २३ ।।

राशीनपास्यात्मदशांशकोना
लग्नांशका रामहृता समाःस्युः ।।
शेषस्य लिप्तास्तिथिभिर्विभक्ता
मासा अथो शेष-विलिप्तिकाश्च ।। २४ ।।

त्रिशता परिहृता दिनादिकं
लग्नजीवितमिदं प्रकीर्तितम् ।।
पिण्डजे सहज-संज्ञके तथा
जीवशर्मगदितेऽपि जीविते ।। २५ ।।

संस्कार एव मुदितो ग्रह जीवितांश-
संशोधने परमभावफलानुसारम् ।।
उक्तात्पके सति च भावफलेऽनुपाताद्
ग्राह्यो बुधैर्विधिरसाविहभावयुक्तः ।। ३० ।।

अंशोद्भवं मूर्तिवलात्प्रधानं
सूर्यस्य वीर्यादिह पिण्डसंज्ञम् ।।
नैसर्गिकं तद् द्विजराजवीर्याद्
वीर्यं त्रयाणामथचेत्समानम् ।। ३१ ।।

(अग्रे पाठ–विच्छित्तिः)

## 1124/24263 लघुपाराशरी-सटीक

Opening :

श्रीगणेशाय नमः ।।

कृपाजलनिधिहृताऽखिलनमद्दुराधिजंनु-
र्जरामृतिभयामयोन्मथितजीवदिव्यौषधिः
तुषारगिरिवंशवारिधिःकलानिधिःकोप्यसौ
विभाति विनमद्विधिर्निरवधूर्नमत्शेवधिः ।। १।।

श्रीमद्गोविन्दरामाभिधविबुधशिरोरत्नसंशोधितोऽयं
ग्रन्थो वाग्विश्वमुद्रांकितभवनपदख्यातसंज्ञे मनोज्ञे ।।
मुद्रागारे विशाले विविदिषुसुमनः प्रीतयेमुद्रितोवाग्
विश्वेन्द्रस्याज्ञया संजनितबुधमुदे वीरसिंहस्य काश्याम् ।।२।।

।। इति प्रथमावृत्तिः ।।

श्रीलक्ष्मीरमणं गणेशमभयं श्रीमद्गुरुं शारदां
सूर्यादिग्रहमण्डलं सविनयं नत्वा विदां प्रीतये ।।
ज्योतिश्शास्त्रकलाकुतूहलरतिस्तत्तत्प्रबन्धानहं
वीक्ष्योद्योतमिमं तनोमि विशदं दायप्रदीपेऽमलम् ।।३।।

परमसुखमुदारं ज्ञातसच्छास्त्रसारं
विजितभवविकारं व्यक्तमुक्तिप्रकारम् ।।
श्रुतिनयनविचारं भूरिशिष्यप्रचारं
गुरुमविनयहारं दृष्टपारं स्मरामि ।। ४ ।।

(मूलम्)

।। ॐ।।

श्रीमत्पाराशरी-होरानुसारीविदुषांमुदे ।।
अस्तूद्योतयुतस्सोऽयमुड़ दायप्रदीपकः ।। १ ।।

**Closing ;**

यद्वंशे नहि मूढ़तामुपगतो नापण्डितो नाधनो
नो दीनोन च दुःखितो न तपसा हीनो न वा दुर्बलः ।।
नापूज्यो न च राजमानविधुरो ना सन्ततिर्नामितिः
सोऽयंसूरिपराशरो मुनिवरो वर्वर्ति सर्वोपरि ।। १ ।।

तदन्वये शुद्धमतिः स नान्यः
सद्वासनाढ्यो धिषणा-घनाढ्यः ।।
पाण्डेयनामा गिरधारिलालो
वृन्दावनोद्देशलसज्जरोल्याम् ।। २ ।।

तस्यात्मजः कुन्दनरामशर्मा
तदात्मजोभूद्धरिरामशर्मा ।।
तदात्मजः स्वान्तनिविष्टरामः
सिद्धान्तविद् भैरवदत्तसूरिः ।। ३ ।।

अकारि तेनायमुडुप्रदीपो-
द्योतो गुरूक्तिप्रतिषिद्धदोषः ।।
विद्वज्जनानां गुणसद्मनानां
मवेदनायास-विलासहेतुः ।। ४ ।।

अभूद्भैरवसूक्तीनां लिपिकृद्धरणीधरः ।।
महाभारतनिर्माणे व्यासस्येव गणेश्वरः ।। ५ ।।

**Colophon :** ।। इति श्रीलघुपाराशरी समाप्ता ।।

## 1161/24800 सवाई जयसिंह निजेष्टरहस्य

Opening : योऽस्मत्कुले समुत्पन्नः स एतदवधारयन् ।।
भुक्ति मुक्ति परां मव्यामाप्नुयान्नात्र संशयः ।। ९ ।।

विशेपतः क्षत्रियाणामयं मार्गो निरूपितः ।।
पञ्चाचाररतोयत्र सिद्धि विन्दति मानवः ।। १० ।।

तत्रापि च कलावस्मिन् सर्वधर्मं बहिष्कृते ।।
मवेदागममार्गेण सिद्धिर्न श्रौतवर्त्मना ।। ११ ।।

कुलार्णवे-

आगमेष्वपि सर्वत्र ज्ञेयो मुख्यः कुलागमः ।।
श्रीविद्याऽऽराध्यते यत्र पञ्चाचाररतैर्जनैः ।।१८।।

Closing : माया तन्त्रे-

बालायास्तु कुमारोऽसौ शिवः कामेश्वरः मतः ।।
ललितायाः पञ्चदश्याः किशोर वयसः शिवः ।।१।।

किशोरः कामराजोऽसौ ब्रह्मानन्दात्मकः परः ।।
षोडश्या पूर्णविद्यायाः पूर्णसर्वकलात्मकः ।। २ ।।

कामेश्वरो नाम शिवः पूर्णब्रह्मस्वरूपकः ।।
ततश्चरणदीक्षा स्याज्जातपूर्णाभिषेचने ।।३।।

प्रकाशश्च विमर्शश्चेत्येवं तच्चरणद्वयम् ।।
चिन्तनीयं परामक्त्या मध्यबिन्दौ समुल्लसत् ।। ४ ।।

ततो निर्वाणदीक्षा ।।

Colophon : ।। इत्यनेकतन्त्रसम्मतं श्री सवाई जयसिंह निजेष्ट-
रहस्यम् ।। श्रीः ।।